श्री

लौगाक्षिमुनिसंगृहीता

# ॥ वैदिकमन्त्रकल्पलता ॥



पं० विश्वनाथ शर्मणा

स्वकीय कश्मीर प्रताप स्टीम प्रेसाह्वये

यन्त्रालये

विद्वद्वरद्वारा शोधयित्वा प्रकाशिता—

प्रथमं संस्करणम्—

शाकाब्दाः १८३५ वैक्रमाब्दाः १९७०



मूल्यं ३) रूप्यकत्रयम्—

श्रीः

## उपोद्घातः ।

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिद्ध्यति ॥ बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् । तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपातिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति मनूक्तेः

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः । यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ कर्म ब्रह्मोद्भवं विद्धि । इति भगवद्वचनप्रामाण्याच्च वेदस्यैव सर्वजगद्व्यवहारमूलत्वत्वात्, तथा त्रयो धर्मस्कन्दा यज्ञोऽध्ययनं दानमिति छान्दोग्योक्तेर्यज्ञस्य स्वाध्यायस्य च सर्वविधधर्मबीजत्वप्रतिपादनात्सर्वथा वेदस्यैव सकलपुरुषार्थावाप्तिहेतुत्वं च सुस्पष्टतया संसूचितमित्यत्र नास्ति कस्यापि विप्रतिपत्तिः ॥

तमिमं निखिलपुरुषार्थरत्नप्रदं निगमाम्बुधिं निर्मथ्य यज्ञकाण्डोपयोगिमंत्रांस्तत्तन्मंत्रार्षच्छन्दोदैवतविनियोगां-

श्चापरोक्षज्ञानेन करतलामलकवत्प्रत्यक्षीकृत्य परमकारुणिको लौगाक्षिमुनिः सकलधार्मिकगणोद्दिधीर्षया तत्तत्संहिता ब्राह्मणशाखादिग्रन्थेभ्यो नवनीतमिवोद्धृत्येमं कलशार्चनप्रभृति रक्षोघ्नमन्त्राहुत्यन्तं यज्ञकाण्डरूपं ऋक्समुदायं प्रायश्चित्तोपयोगिमन्त्रनिवहादि च सर्वं स्वगृह्योक्तपरिपाट्या निबबन्ध ॥

ततः काललीलयास्मिन्देशे श्रुतिस्मृतिधर्मध्वंसियवनराज्यप्राबल्यात्प्रजाक्षोभाच्चैवंविधानि यज्ञकाण्डपुस्तकानि प्रायशो लुप्तप्रायाणि बभूवुः ॥ यानि पुनरधुनावशिष्टानि तानि चासम्यक्पदच्छेदविन्यासात्प्रायशोऽशुद्धानि कुत्रचित्कुत्रचिद्भ्रष्टाक्षराणि च दरीदृश्यन्त इत्यतो विदुषां मनःक्लेशमेव जनयन्तीत्यत्र न काप्ययुक्तिः ॥

व्यतीताब्दार्धशत्यामपि विद्वद्रत्नमण्डितायामपि कश्मीरभूमौ एवंविधानां दुरवगाहानां कार्याणां बहुद्रव्यप्रयत्नसाध्यत्वादन्यस्मात्कस्माच्चिद्वैवंविधाद्धेतोः प्रजाभाग्यवैकल्येन न केनापि विद्वद्वरेणैतदुद्धारे प्रयत्नः श्रितः ॥

अधुना निःसीमदयाभरितहृदयश्री १०८ मन्महाराजाधिराज-प्रतापसिंहप्रभूणामाज्ञामवाप्य तदीयं साहाय्यं

चावलम्ब्य मया महता द्रव्यव्ययेन संक्रीते स्वकीये कश्मीरप्रतापप्रेसाह्वये वाष्पयन्त्रालयेऽस्य मुद्रणं कृतम् ॥

एतच्छोधनाय च बहूनि प्राचीनानि शारदाक्षरलिखितपुस्तकानि, भारतवर्षीय-तत्तद्देशमुद्रितवेदपुस्तकानि च बहुना प्रयत्नेन संगृह्य शर्मण्यदेशायातं काठकब्राह्मणं च सम्यक्संकलय्य यावच्छक्यं प्रयत्नः कृतः ॥

तदिदमैहिकामुत्रिकश्रेयःसाधनं यज्ञकाण्डोपयोगि वेदमन्त्रपुस्तकं पुरोहितमुख्यानां याजकवराणां, भक्तिश्रद्धाशालिनां यजमानानां च शर्मावहं भूयात् ॥

पाठशुद्धौ प्राचीनपुस्तकदाने च यैर्विपश्चिद्भिरत्रविषये साहाय्यं कृतं तेभ्यः कोटिशो धन्यवादा दीयन्ते ॥
निवेद्यते चास्माभिर्बद्धाञ्जलिभिर्यदिकश्चिद्वेदरक्षको ब्राह्मणवरः प्राचीनशुद्धतरपुस्तकसमर्पणेनास्मान्कृतार्थयेत्तदीयकृपायाः सर्वथा कृतज्ञा भविष्याम इति प्रार्थयते

पं० विश्वनाथः

कश्मीरप्रतापस्टीमयन्त्रालयाधिपतिः

श्रीनगरवासी

ओं

श्रीगणेशाय नमः ॥

## कूष्माण्ड प्रारंभः ॥

अथ कूष्मांडैर्जुहुयाद्यो ऽपूत इव मन्येत यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्येयमिति अयोनौ वा रेतः सिक्त्वान्यत्र स्वप्नादरेपा वा पवित्रकामः पौर्णमास्याममावस्यां वा शुद्धपक्षस्य रोहिण्यां वा स्नातः शुचिः शुचिवासाः कृष्णाजिनवासा वा ब्रह्मचारिकल्पेन व्रतमुपैति संवत्सरं मासं द्वादशरात्रं षड्रात्रं त्रिरात्रं वा (न मांसमश्नीयात् । नस्त्रियमुपेयात् । नोपर्यासीत जुगुप्सेतानृतात्पयोभक्ष) इति प्रधानकल्पो यावकं वोपभुञ्जानः कृश्छ्रं द्वादशाहो भैक्ष्यं वा तद्विधेषु । पयो ब्राह्मणस्य व्रतं । यवागूं रा-

जन्यस्य। आमिक्षां वैश्यस्य। सौम्ये ऽप्यध्वर इत्येतद्व्रतं ब्रूयात् यदि मन्येतोपदास्यामीत्योदनं धानाः सक्तून् घृतमित्यनुव्रतयेत् पूर्वाह्णे ऽग्निमुपसमाधाय चरुं श्रपयित्वा (यद्देवा देवहेळनं) (यददीव्यन्नृणामहं) आयुस्ते विश्वतो दधदित्येतैः सूक्तैः प्रत्यृचमाज्यं जुहुयात् ( यद्देवा देवहेळनमिति ) तिसृभिः ( भद्रं कर्णेभिरिति ) चतसृभिः ( पुनंतु मा पितर ) इति नवभिः ( पुनर्मामैत्विन्द्रियमिति ) तिसृभिः ( रथे अक्षेष्विति ) चतसृभिः ( हिरण्यवर्णा ) इति तिसृभिः ( अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कूष्मर्षिभ्य ) इति व्रतहोमः ( अग्ने त्वं पारयेति ) स्विष्टकृतं। वैश्वानर्येण सूक्तेन प्राङ्मुखः प्राञ्जलिरुपतिष्ठते जपेत्सूक्तानि पराञ्चि यानि वैश्वानर्यं चैवमोदनमासाध्याग्न्याधेये दशहोता दार्शपौर्णमासयोश्चतुर्होता चातुर्मास्येषु पञ्चहोता पशौ षट्होता

सौम्ये सप्तहोतेति ह* विज्ञायते कर्मादिष्वेतैर्जुहुयात् पूतो देवलोकान्समश्नुत इत्येतत् इत्येतत् ॥ ॥

अन्यच्च ॥

अथ कूष्मांडैर्जुहुयाद्यो ऽपूत इव मन्येत यथा वै भ्रूणहैव सैष भवति यो ऽयोनौ रेतः सिञ्चति यद्-र्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्येत इत्ययोनौ रेतः सेकः स्वप्नादन्यत्र भ्रूणहत्या ब्रह्महत्या यो वा पवित्रकामो ऽमावस्यायां पौर्णमास्यां वा केशश्मश्रु-लोमनखानि वापयित्वा शुद्धपक्षस्य रोहिण्यां वा स्नातः शुचिः शुक्लवासाः कृष्णाजिनवासा वा ब्रह्म-चारिकल्पेन व्रतमुपैति संवत्सरं मासं चतुर्विंशति द्वादश षट् तिस्रो वा रात्रीः ( न मांसमश्नीयात् ) ( न स्त्रियमुपेयात् ) नोपरि शयीत जुगुप्सीतानृता-



* हविर्ज्ञायते

त्पयो व्रतयतीति प्रधानकल्पः ॥ यावकमुपभुञ्जीत कृच्छ्रं द्वादशरात्रं वा चरेत् यवागूं राजन्यस्यामिक्षां वैश्यस्य सौम्ये ऽप्यध्वर इत्येतद्व्रतं ब्रूयात् यदि मन्येतोपदास्यामीति ओदनं धानाः सक्तून्घृतमित्यनुव्रतयेदात्मनो ऽनुपदासायेति ॥ ब्राह्मणं पाकयज्ञिकेन धर्मेणाग्निमुपसमाधाय सम्परिस्तीर्य परिधानुप्रत्यग्निमुखान्तं कृत्वा सावित्रीं पुरोवाक्यामनूच्य सावित्र्या पक्वाञ्जुहोति ॥ ( अथ कूष्मांडैर्यद्देवा देवहेळनमिति ) तिसृभिः ( भद्रं कर्णेभिरिति ) चतसृभिः (पुनन्तु मा पितर) इति नवभिः (पुनर्मामैत्विन्द्रियमिति ) तिसृभिः ( रथे अक्षेष्विति ) चतसृभिः ( हिरण्यवर्णा ) इति तिसृभिः प्रति मंत्रमाज्यस्य हुत्वा ( अथ व्रतहोमान्जुहोति ) ( अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये कृष्णमर्षिभ्य ) इति व्रतहोमः ॥ ( अग्ने त्वं पारयेति ) स्विष्टकृतं वैश्वानर्येण

सूक्तेन प्राङ्मुखः प्राञ्जलिरुपतिष्ठते जपेत्सूक्तानि पराञ्चि यानि वैश्वानर्यं च एवमोदनमासाद्याग्न्याधेये दशहोता दर्शपूर्णमासयोश्चतुर्होता चातुर्मास्येषु पञ्चहोता पशुयज्ञे षड्ढोता सोमे सप्तहोतेति ह विज्ञायते कर्मादिष्वेतैर्जुहुयात्पूतो देवलोकं समश्नुत इत्येतदित्येतत् ॥ यद्देवा देवहेळनमित्येकविंशर्चस्य प्रथमानुवाकस्य ब्रह्मा स्वयंभूर्ऋषिः लिंगोक्ता देवता आदित आरभ्य क्रमेण चतसृणामनुष्टुप् छन्दः। पञ्चमी त्रिष्टुप्। षष्टी षडवसाना अतिजगती। सप्तमी जगती। अष्टमी त्रिष्टुप्। नवमी षट्पदा जगती। दशमी बृहती। ततो द्वे षट्पदे शक्वर्यौ। त्रयोदशी त्रिष्टुप्। चतुर्दशी गायत्री। ततस्तिस्रस्त्रिष्टुबस्तिस्रोऽनुष्टुभ एकविंशी त्रिष्टुप्। आज्यहोमे विनियोगः ॥ १ ॥

॥ ॥ इतिप्रथमोऽनुवाकः ॥ ॥

यदद्दीव्यमिति द्वितीयानुवाकस्य त्रयोदशर्चस्य ब्रह्मा स्वयंभूर्ऋर्षिर्लिङ्गोक्ता देवता आद्या प्रस्तारपंक्तिः। द्वितीयाद्याश्चतस्रस्त्रिष्टुबः। दशम्यनुष्टुप्। एकादशी चतुष्पदोष्णिक्। द्वादश्यनुष्टुप्। त्रयोदशी त्रिष्टुप्। आज्यहोमे विनियोगः ॥ २ ॥

॥ ॥ इति द्वितीयोऽनुवाकः ॥ ॥

आयुस्ते विश्वतो दधदिति तृतीयानुवाकस्य सप्तदशर्चस्य ब्रह्मा स्वयंभूर्ऋर्षिः लिङ्गोक्ता देवता आद्यानुष्टुप्। द्वितीया तृतीया त्रिष्टुप्। ततस्तिस्रो गायत्र्यः। सप्तम्यष्टम्यौ त्रिष्टुभौ। ततः षडनुष्टुभः पञ्चदशी ककुब्मती। षोडश्यनुष्टुप्। सप्तदशी पञ्चधा शक्कर्यष्टिर्वा। आज्यहोमे विनियोगः ॥ ३ ॥

॥ ॥ इति तृतीयानुवाकार्षम् ॥ ॥

अथ सूक्तार्षम्

स्वयंभुवो ब्रह्मा लिंगोक्ता देवताः समिधादानं

पाप्मापहं च यद्देवा देवहेळनमित्यष्टौ आद्याश्चतस्रो ऽनुष्टुभः पञ्चम्यष्टम्यौ त्रिष्टुभौ षट्सप्तम्यौ जगत्यौ ॥ यददीव्यामिति सप्तोनाष्टौ त्रिष्टुप् महान्त्या प्रस्तारपांक्तिः षष्टी गायत्री दशम्यनुष्टुबुपान्त्या द्व्युष्णिक् ॥ आयुस्ते विश्वतो दधदिति सप्तोनाद्या द्वि षट् सप्तम्यस्त्रिष्टुप् तृतीयाद्यास्तिस्रो गायत्रं पञ्चाष्टम्याद्यानुष्टुप् शक्कर्यन्तम्। सौत्रामण्या निचाकुणस्य ॥ (यद्देवा देवहेळनमिति) तिसृभिरनुष्टुप् (भद्रं कर्णेभिरिति) चतसृभिः शशुशैशवयोः ॥ आद्यान्त्ये त्रिष्टुप् द्वितीया विराट् तृतीया जगती ॥ शेषः कोकिलस्य राजपुत्रस्य राज्येप्सोः ॥ (पुनन्तु मा पितर) इति नवभिः। चतुर्थीचाद्या द्वे ऽनुष्टुभौ। त्रिष्टुबन्त्या वैश्वदेवी ॥ शेषं गायत्रम् । तृतीया पञ्चम्याद्याश्चतस्रो गायत्रं ॥ ॥ ब्रह्मणो यच्चानि रुक्मम् ॥ (पुनर्मामैत्विन्द्रियमिति) तिसृभिरनुष्टु-

बहुरूपा प्रस्तारपंक्तिः ॥ अपां यो द्रवण इति चतस्रः प्रजापतेस्त्रिष्टुप् ॥ (हिरण्यवर्णा इति) तिसृभिः कश्यपस्य त्रिष्टुप् ॥ अगस्त्यस्य (अग्ने त्वं पारयेति) त्रयोदश स्वयंभुवो लिंगोक्ताद्यास्तिस्रः षष्ट्यादितिस्रस्त्रिष्टुबेकादशी चतुर्थ्यादिद्वावनुष्टुब्नवमी जगती पंक्तिर्द्वे शक्वर्यन्तम् ॥ वैश्वानरायेत्यनेन सूक्तेन ॥ अस्य सूक्तस्य द्वादशर्चस्य ब्रह्मा स्वयंभूर्ऋषिः वैश्वानराद्या लिंगोक्तदेवता आद्ये त्रिष्टुभौ। तृतीयाचतुर्थ्यावनुष्टुभौ। ततस्तिस्रस्त्रिष्टुभः। अष्टमी पंक्तिः। ततो द्वे त्रिष्टुभौ। एकादशी च द्वादशी पञ्चदशी शक्वर्यौ। उपस्थाने विनियोगः॥ ॥ ॥

अथ वेदविद्भिः कूष्मांडनिरुक्तिः कृता सा यथा ॥

अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च त्रिविधं कायिकं स्मृतम् ॥ १
पारुष्यमनृतं चैव पैशुन्यं चैव सर्वशः ।

असंबद्धप्रलापश्च वाचिकं स्याच्चतुर्विधम् ॥ २ ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥ ३ ॥
एवं दशविधं पापं दशजन्मसमुद्भवम् ।
यत्पाठाच्च शमं याति तत्कूष्मांडं विदुर्बुधाः ॥ ४ ॥

अस्य श्रीकूष्मांडमंत्र+पाठस्य ब्रह्मा स्वयंभूर्ऋषिः गायत्रं छन्दः कूष्मांडो देवता समस्तरात्रिन्दिनकृत-पापनिवारणार्थे कूष्मांडमंत्रपा०ठे विनियोगः

* अथ ध्यानम् *

कूष्मा नाम मुनीश्वरास्त्रिभुवनंख्याताः सुरूपाः शुभा
अण्डानाममृतेश्वरा विचरतां मध्ये स्वहंसात्मकाः ।
तेऽपि यत्पठनात्परात्परतरां श्रेष्ठां गतिमास्थिताः सो-
ऽयं नो विदधातु सौख्यनिचयं पापारिनाशं सदा । १ ।
यत्पाठाद्विलयं प्रयान्ति शतशः पापारिसंघाः क्षणा
द्धोमात्तर्पणसञ्चयात्सुमहतामभ्यासनात्सद्वरात् । सो-



+ (होमस्य) ० (होमे)

ऽयं ब्रह्ममुखोद्गतः परतरो मंत्रादिगर्भो महान्कूष्मां-
डो विदधातु सौख्यनिचयमग्नेः पुरः संस्थितः । २ ॥

---

कूष्मांडानि कूष्माणां शकुनीनामंडस्थानाम् ॥
यद्देवा देवहेळनं यद्वाचानृतमूदिम । आदित्यास्तस्मा-
न्मुञ्चतर्तस्यर्तेन मामुत ॥ १ ॥ देवा जीवनकाम्या य-
द्वाचानृतमूदिम । तस्मान्न इह मुञ्चत विश्वे देवाः स-
जोषसः । २ ॥ ऋतेन द्यावापृथिवी ऋतेन त्वं सरस्व-
ति । कृतान्नः पाह्येनसो यत्किञ्चानृतमूदिम ॥ ३ ॥
इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः । ते नो
मुञ्चन्त्वेनसो यत्किञ्चानृतमूदिम ॥ ४ ॥ सजातशंसा-
दुत जामिशंसाज्ज्यायसः शंसादुत वा कनीयसः ।
अ×नाधृष्टं देव कृतं यदेनस्तस्मात्त्वमस्माञ्जातवेदो
मुमुग्धि ॥ ५ ॥ यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं

× अनादृष्ट

मातरं वा जिहिंसिम। अग्निर्नस्तस्मादेनसो गार्हस्पत्यः[1]
प्रमुंचतु चकृम यानि दुष्कृता ॥६॥ येन त्रितो अ-
र्णवान्निर्बभूव येन सूर्यस्तमसो निर्मुमोच। येनेन्द्रो
विश्वा अजहादरातीस्तेनाहं ज्योतिषां[2] ज्योतिरानशा-
न आक्षि ॥७॥ यत्कुसीदमप्रतीतं मयीह येन यम-
स्य मिथुनाचरामि। एतत्तदग्ने अनृणो भवामि जी-
वन्नेव प्रति तत्ते दधामि ॥८॥ यददीव्यन्नृणमहं
बभूवादित्सन्वासञ्जगरञ्जनेभ्यः। अग्निर्नस्तस्मादि-
न्द्रश्च संविदानौ प्रमुञ्चताम् ॥९॥ यद्धस्ताभ्यां चकर
किल्विषाण्यक्षाणां वघ्नुमुपजिघ्रमाणः। उग्रं पश्या
च राष्ट्रभृच्च तान्यप्सरस अनुदत्तामृणानि ॥१०॥
उग्रं पश्ये राष्ट्रभृत्किल्विषाणि यदक्षावृत्तमनुदत्तमे
तत्। नेन्न ऋणादृणवाँ इश्छमानो यमस्य लोके
अधिरज्जुरायत् ॥११॥ अव ते हेळो वरुण नमोभि-
रव यज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्यमसुर प्रचेतो



१ अग्निर्मा २ ज्योतिषा

राजन्नेनांसि शिश्रथः कृतानि । २१ ॥ उदुत्तमं वरुण
पाशमस्मदवाधमं वि मध्यमं श्रथय । अथा वयमा-
दित्य व्रते तवानागसो अदितये स्याम । १३ ॥ इमं मे
वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचके १४
तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो
हविर्भिः । अहेळमानो वरुणेह बोध्युरुशँस मा न
आयुः प्र मोषीः ॥ १५ ॥ त्वं नो अग्ने वरुणस्य वि-
द्वान्देवस्य हेळोऽव यासिसीष्ठाः । यजिष्ठो वह्नितमः
शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत् ॥ १६ ॥
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो
व्युष्टौ । अव यक्ष्व नो वरुणँ रराणो वीहि मृळीकँ
सुहवो न एधि ॥ १७ ॥ संकसुको[1] विकसुको[2] निर्ऋथ-
थो यश्च निस्स्वरः[3] । तेऽस्मद्यक्ष्ममनागसो दूराद्दूरम-
चीचतन् । १८ । निर्यक्ष्ममचीचतन्कृत्यां निर्ऋतिं च ।
तेनान्योऽस्मत्समृश्छतां[4] तमस्मै प्रसुवामासि ॥ १९ ॥



१ संकुसुका २ विकुसुका ३ निस्सुनः ४ समृश्छात

दुःशंसानुशंसाभ्यां घनेनानुघनेन च । तेन योऽन्यो-
ऽस्मत्समृश्छतां तमस्मै प्रसुवामासि ॥२०॥ संवर्चसा
पयसा सन्तनूभिरगन्महि मनसा सँ शिवेन। त्वष्टा
सुदत्रो विदधातु रायो नोऽनु मार्ष्टु तन्वो यद्विलिष्ट-
म् ॥ २१ ॥ +आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः ।
पुनस्ते प्राण आयातु परा यक्ष्मँ सुवामि ते ॥ २२ ॥
इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सँ
शिशाधि। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा
जरदष्टिर्यथासत् ॥ २३ ॥ अग्न आयूँषि पवस आ
सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ २४ ॥
अग्निर्ऋषिः पवमानः पांचजन्यः पुरोहितः । तमी-
महे महागयम् ॥ २५ ॥ अग्ने पवस्व स्वपा अस्मे
वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ॥ २६ ॥ अग्ने
जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व
अधि नो ब्रूहि सुमना अहेळञ्शर्मन्ते स्याम त्रिवरूथ



+ आयुस्ते

उद्भौ ॥ २७ ॥ सहसा जातान्प्रणुदा नः सपत्नान्प्र-
त्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्य-
मानो वयं स्याम प्रणुदा नः सपत्नान् ॥ २८ ॥ अग्ने
यो नोऽभितो वृको जनो वारो जिघांसति । तं त्वं[1] वृत्र-
हञ्जहि वस्वस्मभ्यमाकृधि ॥ २९ ॥ अग्ने यो नोऽभि-[2]
दासति समानो यश्च नेष्ठ्यः । तं वयँ समिधं कृत्वा तु-
भ्यमग्ने पिदध्मसि ॥ ३० ॥ यो नः शपादशपतो यश्च
नः शपतः शपात् । इध्मस्येव प्रख्यायतस्तस्य मु-
च्छेषि किंचन ॥ ३१ ॥ सँशितं मे ब्रह्म सँशितं वीर्यं
बलम् । सँशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरो-
हितः ॥३२॥ उदेषां बाहू अतिरमुद्वर्चो अथो बलम् ।
क्षणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ अहम् ॥ ३३ ॥
पुनर्मनः पुनरायुर्म आगात्पुनश्चित्तं पुनराधीतं म
आगात्पुनश्चक्षुः पुनः श्रोत्रं म आगात् । वैश्वानरो
अदब्धस्तनूपा अवबाधतां दुरितानि विश्वा ॥ ३४



१ ताँ स्त्व २ ऽभि धास्यति

सौत्रामण्या निचांकुणास्य ॥

यद्देवा देवहेळनं देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः ॥ ३५ ॥ यदि दिवा यदि नक्तमेनाँसि चकृमा वयम्। वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः ॥ ३६ ॥ यदि जाग्रद्यदि स्वप्न एनाँसि चकृमा वयम् सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः ॥ ३७ ॥

प्रायश्चित्तानि सर्वान्तीयानि शिशुशैशवयोः ॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरंगैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥३८॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ३९। पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः। अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसागमन्निह ॥ ४० ॥ शत-



÷ व्यशेमहि

मिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूना-
म्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिष-
तायुर्गन्तोः ॥४१॥

शेषः कोकिलस्य राजपुत्रस्य राज्येप्सोः ॥

पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः।
पुनन्तु प्रपितामहाः पवित्रेण शतायुषा ॥४२॥
पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः। पवित्रेण
शतायुषा विश्वमायुर्व्यश्नवै।४३। अग्न आयूँषि पव-
स आसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुना-
म् ॥४४॥ पुनन्तु मां देवजनाः पुनन्तु मनसा धि-
यः। पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा।४५।
पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत्। अग्ने क्रत्वा
क्रतूँरनु ॥४६॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा।
ब्रह्म तेन पुनातु मा ॥४७॥ पवमानः सो अद्य नः
पवित्रेण विचर्षणिः। यः पोता स पुनातु मा ॥४८॥



१ स्वर्जनः

उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनी-
हि विश्वतः ॥ ४९ ॥ वैश्वदेवी पुनती देव्यागाद्यस्या-
मिमाँस्तन्वा वीतपृष्ठाः । तया मदन्तः सधमादेषु
वयँ स्याम पतयो रयीणाम् ॥ ५० ॥

ब्रह्मणो यच्चानिरुक्तम् ॥

पुनर्मामैत्विन्द्रियं पुनरायुः पुनर्भगः । पुनर्ब्राह्मणमैतु
मा पुनर्द्रविणमैतु मा ॥ ५१ ॥ यन्मेऽद्य रेतः
पृथिवीमस्कन्यदोषधीरंध्यसरद्यदपः । तदहं पुनरा-
ददे ॥ ५२ ॥ यन्मे रेतः प्रसिच्यते यन्म आ जायते
पुनः । यद्वा मे प्रति तिष्ठति तेन मामममृतं कुरु तेन
सुप्रजसं कुरु ॥ ५३ ॥

अपाँ य्यो द्रवण इति प्रजापतेः ॥

रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शु-
ष्मे । इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा
संविदाना ॥ ५४ ॥ या हस्तिनि द्वीपिनि या हिरण्ये

गोष्वश्वेषु पुरुषेष्वन्तः । इन्द्रं या देवी ० ॥ ५५ ॥
सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये
या । इन्द्रं या देवी ० ॥ ५६ ॥ या राजन्ये दुन्दुभा
आयतायामश्वस्य क्रन्दे पुरुषस्य मायौ । इन्द्रं या दे-
वी ० ॥ ५७ ॥

हिरण्यवर्णा इति कश्यपस्य ॥

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो या-
स्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः
शँस्योना भवन्तु ॥ ५८ ॥ यासां देवा दिवि कृण्वन्ति
भक्षं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं गर्भं ०
॥ ५९ ॥ यासां राजा वरुणो याति मध्ये सत्यानृते
अवपश्यञ्जनानाम् । या अग्निं गर्भं ० ॥ ६० ॥

अग्नये नमः ॥ वायवे नमः ॥ सूर्याय नमः ॥
ब्रह्मणे नमः ॥ प्रजापतये नमः ॥ कूष्मर्षिभ्यो
नमः ॥ ॥

अग्ने त्वं पारयेति स्विष्ठकृतम् ॥

अग्ने त्वं पारयानव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ ६१ ॥(वैश्वानरीयेण सूक्तेन प्राङ्मुखः प्राञ्जलिरुपतिष्ठते जपेत्सूक्तानि पराञ्चि यानि वैश्वानरीयं च) ॥ वैश्वानराय प्रति वेदयामो यदी मृळँसङ्गरो देवतासु । स एतान्पाशान्प्रमुञ्च प्रवेद स नो मुञ्चतु दुरितादवद्यात् ॥ ६२ ॥ वैश्वानरः पावया नः पवित्रैर्यत्सङ्गरमाभिधावाम्याशाम् । अनाजानन्मनसा याचमानो यदत्रैनो अपतत्सुवामि ॥ ६३ ॥ अमू ये सुभगे दिवि विश्रृतौ नाम तारके । प्रेहामृतस्य यच्छतमेतद्बद्धकमोचनम् ॥ ६४ ॥ विजिहीष्व लोकान्कृधि बन्धान्मुञ्चासि बद्धकम् । योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्यात् ॥ ६५ ॥ सुप्रजानन्प्रातिगृह्णाति विद्वान्प्रजापतिः प्रथमजा ऋतस्य । अस्माभिर्दत्तं ज-

१ बद्धान २ मुञ्चामि

रसः पुरस्तादशिछन्नं तन्तुमनु सन्तरेम ॥ ६६ ॥
उत[1] तन्तुमन्वेके सन्तरन्ति येषां दत्तं पित्र्यमायतनव-
त् । अबन्ध्वेके ददतः प्रयश्छन्दातुं चेच्छक्नुवान्स स्व-
र्ग एषाम् ॥ ६७ ॥ आरभेथामनु सँरभेथां समानं प-
न्थामवतो घृतेन । यद्वां पूर्तं परिविष्ठं यदग्नौ तस्य गु-
प्त्या इह जायापती संरभेथाम् ॥ ६८ ॥ यदन्तरिक्षं
पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम । अग्नि-
र्नस्तस्मादेनसो औपासन उन्नेनेषद्दुरिता यानि चकृ-
म ॥ ६९ ॥ भूमिर्माताऽदितिर्नो जनित्रं भ्रातान्तरिक्षम-
भिशस्त्या नः । द्यौर्नः पिता पित्र्याच्छं भवाति जामि-
मृत्वा मावपत्सि लोकान् ॥ ७० ॥ यत्रासुहार्दः सुकृतो
मदन्ति विहाय रोगं तन्वँ स्वाम् । अश्लोणा अङ्गैरहु-
ताः स्वर्गे लोके तत्र पश्येम पितरं च पुत्रम् ॥ ७१ ॥
यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वा करि-
ष्यन् । यद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च



[1] ततं

प्रतिजग्रहाहमग्निर्मा तस्मादनृणं करोतु ॥ ७२ ॥
यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम् । यद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च प्रति जग्रहाहमग्निर्मा तस्मादनृणं करोतु ॥ ७३ ॥

---

अनेन मन्त्रपाठेन आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थमग्निः प्रीयतामग्निः प्रीतोऽस्तु ॥ वायुः प्रीयतां वायुः प्रीतोऽस्तु ॥ सूर्यः प्री० ॥ ब्रह्मा प्री० ॥ प्रजापतिः प्री० ॥ कूश्मर्षयः प्रीयन्तां कूष्मर्षयः प्रीताः सन्तु ॥ अनेन कूष्माण्डमन्त्रपाठेन पापान्मुक्तिः पुण्यवृद्धिरस्तु ॥ ॥ ॥ ॥ ॥ ॥

इति कूष्माण्डमंत्रसंहितासमाप्तिः ॥ ॥

ॐ

ब्रह्मणः प्रजापतेर्यजुः ॥

वातरशना ह वा ऋषयः श्रमिन ऊर्ध्वमन्थिनो बभूवुस्तानृषयोऽर्थमायंस्ते निलायमचरंस्तान्प्रदद्दृशुः कूष्माण्डानि तांस्तेऽन्वपश्यञ्छ्रद्धया च तपसा च तानृषयोऽपृच्छन् कथानिलायं चरथेति त ऋषीनब्रुवन्नमो वोऽस्तु भगवन्तोऽस्मिन्धाम्नि केन वः सपर्यामेति तानृषयोऽब्रुवन्पवित्रं नो ब्रूत येनारेपसो भविष्याम इति त एतानि सूक्तान्यपश्यन्यद्देवा देवहेळनं यददीव्यनृणमहमायुस्ते विश्वतो दधदित्येतैराज्यं जुहुत तेनारेपसो भविष्यथेति त एतैराज्यमजुहुवुस्तेऽरेपसोऽभवन्कर्मादिष्वेतैर्जुहुयात्पूतो देवलोकान्समश्नुते ॥ * ॥

कूष्मा ह वै नाम ऋषयो वातरशनास्ते हँसा हिरण्यया ज्योतिष्पक्षा अजिरा भूत्वाचरंस्तेऽकामयन्ताण्डेषु नः प्रजा ब्रह्म वदेयुरिति तेषामण्डेष्वेव



१ निलयं नीडं वा २ ऋषयो अरेतसो वा

प्रजा ब्रह्मवादिषुस्त आण्डस्था अवदंस्तस्मात्कू-
ष्माण्डानि कूष्माण्डैर्जुहुयाद्यो ऽपूत इव मन्येत
यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्येयमित्ययो-
नौ वा रेतः सिक्त्वा जुहुयाद्यथा वै स्तेनो यथा
भ्रूणहैवमेष भवति यो ऽयोनौ रेतः सिञ्चति यदे-
तैराज्यं जुहोति तैरेवात्मानं पुनीते दीक्षामुपैति दी-
क्षित एतैः सदाधि जुहोति संवत्सरं दीक्षितो भव-
ति संवत्सरादेवात्मानं पुनीते मासं दीक्षितो भवति
यो वै मासः स संवत्सरः संवत्सरादेवात्मानं पुनीते
द्वादश रात्रीर्दीक्षितो भवति द्वादश मासाः संवत्स-
रः संवत्सरादेवात्मानं पुनीते षड्रात्रीर्दीक्षितो भवति
षड्वा ऋतवः संवत्सरः संवत्सरादेवात्मानं पुनीते
तस्य व्रतं न मांसमश्नीयान्न स्त्रियमुपेयान्नोपर्या-
सीत जुगुप्सेतानृतात्पयो ब्राह्मणस्य व्रतं यवागू
राजन्यस्यामिक्षा वैश्यस्य सौम्यप्यध्वर इत्येतद्व्रतं

ब्रूयाद्यदि मन्येतोपदस्यामीत्योदनं धानाः सक्तून्घृतमित्यनुव्रतयेदात्मनो ऽनुपदासायेति ॥ * ॥ * ॥

इति कूष्माण्डब्राह्मणं समाप्तम् ॥

---

## अथ कूष्माण्डफलम् ॥

महापापापनुत्त्यर्थं कूष्माण्डानि यजेद्द्विजः ॥ कृतव्रतः पौर्णमास्यां दर्शे वा प्रातरेव च ॥ १ ॥ पयो यवागूरामिक्षा द्विजातीनां व्रतं क्रमात् ॥ नवां स्थालीं समाहृत्य तस्यां पायसमाश्रपेत् ॥ २ ॥ देवतास्तेन यष्ट्व्या ऋचो होम्या जपेत च ॥ कूष्माण्डानि जपेन्नित्यं जुहुयाद्दर्शपौर्णयोः ॥ ३ ॥ पापी पापाद्विनिर्मुक्तः शुद्धात्मा स्वर्गमाप्नुयात् ॥ सकृज्जप्त्वास्यवामञ्च शिवसंकल्पमेव च ॥ ४ ॥ पश्चात्पुरुषसूक्तं तु ब्रह्महत्या विनश्यति ॥ प्रायश्चित्तानि हुत्वाथ द्विजाञ्छक्त्या प्रपूजयेत् ॥ ५ ॥ इति कूष्माण्डफलम्

॥ ओ३म् ॥

# ॥ श्रीमहागायत्री ब्राह्मणम् ॥

॥ श्रीमहागायत्र्यै नमः ॥

घृतदधितिलाश्चैव यवशर्करमिश्रिताः ।
एतत्पञ्चामृतं प्रोक्तं [1]होमे सर्वार्थसिद्धिदम् ॥

[2]प्रजापतेर्भूर्लोकस्यानुष्टुप् ककुभापृथ्वी ऋषिः विराट्छन्दः ब्रह्मादेवता श्रीमहागायत्रीप्रीत्यर्थं होमे विनियोगः ॥

प्रणव ऋषिः गायत्रीं छन्दः परमाग्निर्देवता व्याहृतीनां क्रमेण जमदग्नि[3]भरद्वाजभगवान्ऋषयः । अग्निर्वायुः सूर्यो देवताः सूर्याद्यावाहनार्थे महागायत्रीप्रीत्यर्थं होमे विनियोगः ॥

---

१ अलक्ष्मीं प्रतिहन्यते २ प्रजापतलोकस्यानुष्टुप् ३ भारद्वाज

गायत्रीं त्रिजगन्नुतां दशभुजां कीयूरहारान्वितां
वक्त्रैः पञ्चभिर्भूषितां त्रिनयनां सर्वायुधैः संयुताम् ।
हंसस्थां वृषवाहनां खगपतावानन्दितां मुक्तिदां
ब्रह्माविष्णुमहेश्वरादिभिवृतां वन्दे त्रिरूपान्विताम् ॥

पञ्चवक्त्रां दशभुजां
प्रतिवक्त्रे त्रिलोचनाम् ।
गायत्रीं सिद्धिदां देवीं
भजामि सर्वकामदाम् ॥
गायत्रीं चिन्तयेद्यस्तु
हृत्पद्मे समुपस्थिताम् ।
धर्माधर्मविनिर्मुक्तः
स याति परमां गतिम् ॥

ओंकारो यस्य मूलं क्रमपदजठरं छन्दविस्तीर्ण-
शाखा ऋक्पत्रं सामपुष्पं यजुरुचितफलं स्यादथर्वा
प्रतिष्ठा । यज्ञश्छाया सुश्वेतैर्द्विजगणमधुपैर्गीयते
यस्य नित्यं शक्तिः सन्ध्या त्रिकालं दुरितभयहरः
पातु नो वेदवृक्षः ॥

सच्छायः स्थिरधर्ममूलवलयः पुण्यालवालान्वि-
तो धीविद्याकरुणाक्षमादिविलसद्विस्तीर्णशाखाश्रि-
तः । सन्तोषोज्ज्वलपल्लवः शुचियशः पुष्पः सदा
सत्फलः सर्वाशापरिपूरको विजयते श्रीवेदकल्प-
द्रुमः ॥

मूलाधाराद्धुतवहकलामिश्रितं भूर्भुवःस्वर्ब्रह्मस्था-
नात्परमगहनात्तत्सवितुर्वरेण्यम् । भर्गो देवः श-
शिकलमयी धीमहीत्येकरूपं धियो यो नः पिव
तममृतं चोदयान्नः परं तत् ॥

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् ।
गायत्रीं वरदाभयांकुशकरां शम्बं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥
आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी ।
गायत्री छन्दसां माता ब्रह्मयोने नमोऽस्तु ते ॥

महाव्याहृतयः प्रजापतेः ।

ॐ अग्नये स्वाहा ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ भूर्भुवः स्वः स्वाहा ॥ ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ महः स्वाहा ॐ जनः स्वाहा ॐ तपः स्वाहा ॐ सत्यं स्वाहा ॥

ॐ अग्नये स्वाहेत्यग्निः सर्वा देवताः सौख्यं करोत्यसौ वा अग्निः प्रीणाति । ॐ भूः स्वाहेति भूमिं वै उर्वन्तरिक्षमुर्व्यादींस्तेन प्रीणाति । ॐ भुवः

स्वाहेति भुवनानां पतय इत्यद्भुतं तेन प्रीणाति। ओं स्वः स्वाहेति [१]आप एष इमं लोकं जयतु तेन सोमपा[२]ः प्रीणन्ति। ओं भूर्भुवस्स्वः स्वाहेति अग्निः सूर्यं ज्योतिष्मन्तं करोति यजमानो वृद्ध्यते। ओं भूः स्वाहेति भूमिर्वै द्विपदाश्चैव चतुष्पदा[३]स्तेन वृद्ध्यते। ओं भुवः स्वाहेति अन्तरिक्षं वै वायुर्देवतास्तेन वायवः प्रीणन्ति। ओं स्वः स्वाहेति वाचो मे प्राणापानौ सम्राट्चक्षुषस्तेन प्रीणाति। ओं महः स्वाहेति महामनसां महांल्लोकाञ्जयति होतारं तेन प्रीणाति। ओं जनः स्वाहेति जनानां जनपते[४]र्जन्तूनामिमं लोकं तेन प्रीणाति। ओं तपः स्वाहेति तपो वा असौ[५]वादित्यो द्वादशमासः संवत्सरस्तेन प्रीणाति। ओं सत्यं स्वाहेति सत्यमिति [६]वरुणचन्द्रमसौ नक्षत्राणि सप्तार्णवस्तेन प्रीणन्ति।

---

१ अपां वा एष २ पः प्रीणाति ३ दाश्च ४ पति ५ सा आदि ६ वरुणौ चन्द्रमसा

अथोत्तरस्मै सर्वा देवतास्तेन[1] प्रीणन्ति तेन सौख्यं करोति। यजमानो वृद्ध्यते सन्तत्यै प्रजावत्या[2] भवति अवच्छिन्नं प्रदीयते[3]। य एवं वेद ॥

॥ इति व्याहृतिब्राह्मणम् ॥

अथ

तत्सवितुरिति गायत्री ब्राह्मणम्

प्रजापतेरार्षं अष्ठीवयश्छन्दः विश्वामित्रगायत्री सविता ऋषिः अग्निर्वायुः सूर्यो देवताः श्रीमहागायत्री देवी सन्तोषणार्थं होमे विनियोगः ॥

अस्य मन्त्रस्य जमदग्निभारद्वाज ऋषिः प्रजापतिर्देवता देवी बृहती छन्दः सर्वप्रायश्चितार्थे होमे विनियोगः ॥

१ देवता तेन प्रीणाति २ प्रजापत्या भवन्ति ३ यन्ते

प्रातः काले कुमारी कुमुदकलिकयाजप्यमाला-
जपन्ती[1] मध्याह्ने प्रौढरूपा विकासितवदना चारुने-
त्रा विशाला। सन्ध्यायां वृद्धरूपा गलितकुचयुगा
मुण्डमालावहन्ती[1] सा देवी दिव्यदेहा हरिहरन-
मिता पातु नो ह्यादिमुद्रा ॥

नीलापीतमनोहरांशुकवती वक्त्रत्रयोद्भासिता[1]
हस्तोद्यद्वरशङ्खपङ्कजगदाधारा खगेन्द्रासना। का-
रुण्यामृतवर्षणैकचतुरा वृद्धोत्पलालङ्कृता[1] भूया-
न्नः किल वैष्णवी ह्यभिमतावाप्त्यै सदा वन्दिता ॥

---

ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो
यो नः प्रचोदयात् ओं ३ ॥

ओं तत्सवितुरिति[1] तदादित्यः सविता प्रसविता[1]
प्र[2]जया पशुषु प्रतितिष्ठति। वरेण्यमित्यग्निर्वै वरि-

---

१ त्या: २ प्रजायै

वः कृणोति । [1]भर्गेति रश्मयः शतं सहस्रमयुतं च प्रतनोति । देवस्य द्योतना पर[2]मंकामस्य धीमहीति धीमान्विश्वस्य [3]व्याप्नोति । धियो यो न इति अह्ना [4]रात्रिः सन्ध्यामुपयन्ति । प्रचोदयादिति प्रजापतिर्वा प्रजा[5]मुपसृजति । पशुषु प्रतितिष्ठति । तस्माद्गायत्री चतुर्विंशत्यक्षरा भवति सर्वस्याप्त्यै सर्वस्याव[6]रुद्ध्यै-नं ब्रह्मचारिणं शतं सहस्रमयुतं च प्रजावान्पशुमान् रयिमानायुष्मन्तं करोति तस्माद्गायत्री [7]आयुरिव परमं कामं गायत्र्याभि प्रतितिष्ठति । य एवं वेद ॥

॥ इति तत्सवितुर्गायत्री ब्राह्मणम् ॥

---

## अथ

ओजोऽसीति गायत्री ब्राह्मणम् ॥

ब्रह्मणः प्रजापतेर्गायत्री सविता देवता गायत्री

---

१ भर्गो देव इति २ मं ३ वा ४ रात्रि ५ नु ६ वारुद्ध्यैनं [illegible] मायुरेव

छन्दः श्रीमहागायत्री देवी प्रीत्यर्थं होमे विनियोगः।

चतुर्भुजामर्कसहस्रकोटिभां
त्रिलोचनां हारकिरीटशोभिताम्।
चतुर्मुखाङ्कोपगतां[1] महोज्ज्वलां
वेदेश्वरीं पञ्चमुखीं नमाम्यहम् ॥

यस्या भूः पाददेशे वसति तदुपरि खङ्गुदे स्वर्गलोको नाभौ मध्ये महाख्यो जन उरसि गतः कण्ठगामी तपश्च। सत्यं मूर्ध्नि शखाख्या त्रिगुणविरहिता निष्कला सुस्वरूपा सा देवी विश्वरूपा वितरतु विभवं वेदमूला पराख्या ॥

ब्राह्मी हंसरथस्थिता मुखसरोज्योतिश्चतुर्वाङ्मयी
मुद्रापुस्तककुण्डलाक्षवलयाधारा चतुर्भिर्भुजैः।
रक्तारक्तविभूषणा प्रहसिता रक्ताम्बरालङ्कृता
कौमारी मम जीवितावधिः सदा भूयादघध्वंसिनी ॥

---

१ खस्याङ्कगतां

देवाश्च वा असुराश्च संय्यत्ता आसँस्तान्गाय-
त्र्यान्तरातिष्ठदोजो वै वीर्यमन्नाद्यं परिगृह्य संवत्सरो
वा वैनं[1] सोऽन्तरातिष्ठच्चतुर्विंशति गायत्र्या अक्षराणि
चतुर्विंशतिः संवत्सरस्यार्धमांसास्ते[2] विदुर्यतरान्वा
इयमुपावत्स्यति त इदं भविष्यन्तीति[3] तां[4] व्यह्वयन्ते-
दाभीत्यसुरांह्वयन्[5]विश्वकर्मन्निति[6] देवांसानान्यतरँश्च[7]
नोपावर्तत[8] ते देवा एतद्यजुरपश्यन्नोजोऽसि सहोऽ-
सि बलमसि भ्राजोऽसि देवानान्धाम नामासि वि-
श्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरिति । सा
देवानुपावर्तत[9] ततो देवा अभवन्परासुरा अभवन्ना-
ग्नेयमष्टाकपालं निर्वपेद्भ्रातृव्यवान्वां[10] स्पर्धमानो वा-
तमासांद्येतै[11]र्यजुभिरभिमृशंदोजो[12] वै वीर्यं संवत्सर
ओज एव वीर्यं भ्रातृव्यस्य वृङ्क्ते सनिर्वीर्यः परा
भवति सैषा गायत्रीनांमिष्टे[13]रथो आहुः क्षेत्रंस्य[14]

---

१ वैनान्सोऽ २ मासमा ३ तीति ४ तं व्यह्वयन्तीदाभी ५ रा आह्व ६ मांणीति ७ वस्यानु-
न्यतरश्चा ८ तान्देवा [तता देवा] ९ पव १० नु ११ धैस्तय १२ श १३ नामिष्टे १४ क्षत्रस्य

संवर्ग[1] इति ॥

॥ इति[2] गायत्री ब्राह्मणम् ॥

अथ द्रष्टृब्राह्मणम् ॥

घोराणामार्षं ब्राह्मणानि प्रजापतेः यजुर्[3]नमस्कारः। घोराणां यजुः दधीच ऋषिः गायत्री छन्दः श्रीविष्णुर्देवता श्रीमहागायत्रीप्रीत्यर्थं होमे विनियोगः ॥

विविधमणिमयूखस्फीतकीयूरहार-
प्रवरकनककाञ्चीकिङ्किणीकङ्कणाढ्याम् ।
सकलभुवनरक्षासृष्टिसंहारसक्तां
निगमपरमविद्यामाश्रये वेदधात्रीम् ॥

अश्वमेधे घोराणामार्षम् ॥

द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उप-

---

१ संवर्धयति [illegible] ३ यजुर्[illegible]कारः ४ [illegible]

शृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः श्रान्ताय[1] नमस्तपसे नमः ॥

ओं द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नम इत्यग्निर्वै द्रष्ट्रा[2] ब्राह्मण उपद्रष्ट्रा[2] वायुरनुद्रष्टा[2] तेभ्य एव नमस्करोति। ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे[3] नम इति। संवत्सरो वै ख्याताऽदित्यो[4] उपख्याता चन्द्रमा अनुख्याता[2] तेभ्य एव नमस्करोति। शृण्वते नम उपशृण्वते नम इति। द्यावापृथिवीभ्यामेव नमस्करोति। सते नमोऽसते नम इति सदसद्भ्यामेव नमस्करोति। जाताय नमो जनिष्यमाणाय नम इति। यज्ञायैव दक्षिणायै च नमस्करोति। भूताय नमो भविष्यते नम इति। ऋक्सामभ्यामेव नमस्क-

१ शा २ ष्टा ३ क्ष्या ४ त

रोति। चक्षुषे नमः श्रोत्राय नम इति। यथा यजुरे-
कविंशतिकृत्वो नमस्क[1]रोति। पञ्चर्तवो द्वादशमा-
सास्त्रयं[2] इमे लोका अ[3]सावादित्य एकविंश एष
स्वर्ग[4]लोकः स्वर्गस्य लोकस्य समष्ट्यै सर्वा[5] वा ए-
त[6]र्ह्येतस्मिन्देवता आशंसन्ती साँ[7]मभिव्याहरिष्यती-
त्यग्निः सर्वा देवता असाँ[3]वादित्योऽग्निर्यदेतैर्नमस्का-
रैरादित्यमुपतिष्ठ[8]ते सर्वाभिरेवैनन्देवताभिः [9]समर्ध-
यत्यश्छंवट्कारं ये ते पन्थानः सविता पूर्व्यास इति
वि[10]तता अन्तरिक्षे तेभिर्नो अद्य पथिभिः सुगेभि
रक्षा च नो अधि च ब्रूहि देव[11] इति स्वर्गस्य लोक-
स्य समष्ट्यै नमोऽग्नये पृथिवीक्षित इत्यग्निनायत-
नेषु निदधातीमानेवै[12]नांल्लोकान्गमयति ॥

॥ इति द्र[13]ष्टृब्राह्मणम् ॥

---

१ स्कुरुते २ यो ३ आसा आदित्य ४ र्गो ५ र्वं ६ हि ७ मामभिव्याह [समभिव्याह] ८ ष्ठति ९ समर्धयति शम्बकार [यच्छं वषट्कार] १० वतता [वीतता] ११ देवा. १२ वैनं लोकं गमयति १३ ष्टृ

## अथ सर्वदेवब्राह्मणम् ॥

[1]भूमेर्वैश्वकर्मणस्य जगती विश्वकर्मा विश्वरूपपरम्ब्रह्म ऋषिः पृथिवी छन्दः आकाशो देवता श्रीमहागायत्रीप्रीत्यर्थं होमे विनियोगः ॥

मध्याह्ने वृषवाहना त्रिनयना शुक्लाम्बरालेपना
खट्वाङ्गं त्रिशिखं कपालडमरू दोर्भिर्वहन्ती सदा ।
शुक्लाशुक्लविभूषणा नरशिरोमालाभिरावेष्टिता
भूयाद्यौवनवत्यसौ त्रिजगतां सर्वार्तिविद्राविणी ॥

यो विश्वचक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमते सँयजत्रैर्द्यावापृथिवी जनयन्देव एकः ॥

[2]यो विश्वचक्षुरुत इति विश्वचक्षुर्वै देवानां भवति । विश्वतो मु[3]खा इति विश्वमुखान्दर्शयति । वि-

---

१ भूमिर्वि २ यो विश्वतश्चक्षुरुत इति विश्वं चक्षुर्वै० ३ मुख इति विश्वमुखा द०

श्वतो हस्त इति विश्वहस्तौ उत्तमा भवति । उत विश्वतस्पादिति विश्वतस्पादाधार [तस्मात्पद्भ्यां च विश्वं धारयति] सम्बाहुभ्यामिति सर्वबाहुर्वै नमते नमस्कुर्याः कुर्वन्ते संय्यजत्रैरिति सर्वस्य जित्यै द्यावापृथिवी इति द्यावापृथिव्योर्धारयते । जनयन्देव एक इति जनमिति जनानां जनप[1]तेर्जन्तूनां[2]मात्मा वै स[3]र्वान्ध्यायन्ते देव एको भवति स[4] देवः सर्वेभ्यो रक्षांसि भवति य एवं वेद ॥

इति यो विश्वचक्षुर्ब्राह्मणम् ॥ [इति सर्वदेवब्रा०]

—०:*:०—

॥ अथाब्रह्मन्ब्राह्मणम् ॥

आब्रह्मन्ब्राह्मणो यजुः पृथ्वीरूपब्रह्मा ऋषिः पर्जन्योऽतिच्छन्दः ओषधयो देवताःश्रीमहागायत्रीप्रीत्यर्थं होमे विनियोगः ॥

---

१ पति २ नां त्मावै ३ सर्वं ध्यायति सर्व [ध्यायन्त] ४ स देवदेवेभ्यो [स सर्वेभ्यो] स देवेभ्यां] ५ स्त

पूर्वाह्ने भाति रक्ता हुतवहवदना हंसयानैकसंस्था
मध्याह्ने चापि शुक्ला वृषवरवहना नागयज्ञोपवीता।
कृष्णा चैवापराह्ने खगवरवहना शङ्खचक्रादिहस्ता
सा सन्ध्या पातु नित्यं हरिहरवदना ब्रह्मरूपा त्रिकालम् ॥

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानुड्वानाशुस्सप्तिः जिष्णू रथेष्ठाः पुरन्धिर्योषा सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवतीर्न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह ब्राह्मण एव ब्रह्मवर्चसं दधाति तस्मात्पुरा ब्राह्मणो ब्रह्मवर्च[2]सी जायतां आ[3]स्मिन्राष्ट्रे रा[4]जन्यः शूर इष-

१ मा २ स्य जायत ३ अ ४ राजन्य इषव्यः शूरो [ राजन्यः शूर ईशव्य इति व्यते ] ( ईषव्यति व्यते )

व्योऽतिव्यते महारथो जायतामित्याह । राजन्य एव शौर्यं महिमानं दधाति तस्मात्पुरा राजन्यः शूर इषव्योऽति व्यते महारथो जज्ञे । [2]दोग्ध्री धेनुरिति धेन्वामेव पयो दधाति तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे । वोढानुड्वानिति । [3]अनुडुह्येव बलं दधाति तस्मात्पुरानुड्वान्वोढा जज्ञे आशुस्सप्तिरिति । अश्व एव बलं दधाति [4]तस्मात्पुराशुरश्वोऽजायत । पुरन्धिर्योषेति । [5]योषित्येव रूपं दधाति [6]तस्माद्रूपिणी युवतिः प्रिया भावुका । जिष्णू रथेष्ठा इति । राजन्य एव जैत्रं महिमानं दधाति तस्मात्पुरा राजन्यो जिष्णुर्जज्ञे । [7]सभेयो युवेति । एष वै सभेयो युवा यः प्रथमवयसी तस्मात्प्रथमवयसी स्त्रीणां प्रियो युवा पुमान्भावुकः । [8]आस्य यजमानस्य वीरो जायतामित्या-

१ राजन्य इषव्यः शूरो महारथो जायत [ राजन्यः शूर ईशव्योऽति व्याधी म० ] २ दुग्ध्री [ दुग्धी धेनुरित्याह ] धेनुमेव ३ अनुड्वानेव जवं [ वीर्यं ] दधाति [ अनुड्वा एव बलं दधाति] ४ तस्मात्पुराशोरश्वोऽजायतां ५ ज्योतिरिव पुरन्दधाति ६ तस्माद्रूपिणी ज्योतिः प्रिया भावुका ७ सभि युज्यनेत्येष वै सभेयो ( ये ) द्येजप्रथमा (म) वयासि ( स्य ) तस्मात्प्रथमा [ म ] वयस्य (सि) तस्मात्प्रथमा [ म ] वयस्य [ सि ] स्त्रीणां प्रिया भावुकः ८ अस्य

ह वै तत्र यजमानस्यैव प्रजायां वीर्यं दधाति तस्मात्पुरा[1] राजन्यस्य वीरो जज्ञे । निकामे—निकामे नः पर्जन्यो वर्षत्विति । निकामे—निकामे वै तत्र पर्जन्यो वर्षति । यत्रैतेन यज्ञेन यजन्ते फलवतीर्न[2] ओषधयः पच्यन्तामिति फलवत्यो वै तत्रौषधयः पच्यन्ते यत्रैतेन यज्ञेन यजन्ते योगक्षेमो नः कल्पतामिति योगक्षेमो वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्लृप्तः[3] प्रजानां योगक्षेमो भवति य एवं वेद ॥

अनेन मन्त्रहोमेनात्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं श्रीमहागायत्री देवी सन्तोषणार्थं धर्मार्थकाममोक्षार्थं यवतिलतण्डुलहोमेन श्रीमहागायत्री सावित्री सरस्वती प्रीयतां प्रीता भवतु ॥

॥*॥ इत्याब्रह्मन्ब्राह्मणम् ॥*॥

---

१ त्पुरे जानस्य वीरो २ फलिन्यो न [ फलवत्यर्न ] [फलवत्यो न] (फलवतीर्णः) ३ क्लृप्तप्रजानां

# ओं

## श्रीगणेशायनमः॥

---

ॐकारो यस्य मूलं क्रमपदजठरं छन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं यजुरुचितफलं स्यादथर्वा प्रतिष्ठा। यज्ञश्छाया सुश्वेतैर्द्विजगणमधुपैर्गीयते यस्य नित्यं शक्तिः सन्ध्या त्रिकालं दुरितभयहरः पातु नो वेदवृक्षः॥

सच्छायः स्थिरधर्ममूलवलयः पुण्यालवालान्वितो धीविद्याकरुणाक्षमादिविलसद्विस्तीर्णशाखाश्रितः। सन्तोषोज्ज्वलपल्लवः शुचियशः पुष्पः सदा सत्फलः सर्वाशापरिपूरको विजयते श्रीवेदकल्पद्रुमः॥

मूलाधाराद्धुतवहकलामिश्रितं भूर्भुवःस्वर्ब्रह्म-
स्थानात्परमगहनात्तत्सवितुर्वरेण्यम् । भर्गो देवः
शशिकलमयी धीमहीत्येकरूपं धियो यो नः पिव त-
मम्रृतं चोदयान्नः परंतत् ॥

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्यु-
क्तामिन्दुनिबद्धरत्नमुकुटां तत्वात्मवर्णात्मिकाम् ।
गायत्रीं वरदाभयांकुशकरां शम्बं[1] कपालं गुणं
शंखं चक्रमथारबिन्दयुगलं हस्तैर्वहन्तीं भजे ॥
आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी ।
गायत्री छन्दसां मातर्ब्रह्मयोने नमोस्तु ते ॥

---

१ शूलं

ओं

## ॥ ऋचकम् ॥

ओजोऽसीति गायत्रीमावाह्य ॥

देवानामार्षम् ॥

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमासि सर्वायुरभिभूः ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यं ओं तत्सवितुर्वरे[1]ण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओं ३ ॥ ॥

स्वस्त्यात्रेयः (विश्वेदेवाः) पांक्तयन्तमग्नेः पञ्चोनाश्चतस्रो गायत्र्यः षडुष्णिहश्चतस्रस्त्रिष्टुभोऽनुष्टु-

१ ण्ययं

भौ बृहती च ॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्य-
दितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति
द्यावापृथिवी सुचेतना ॥ स्वस्तये वायुमुपब्रवामहै
सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं
स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ विश्वे
देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः॥
स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न
इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ स्वस्ति
पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुनर्ददता घ्नता
जानता सङ्गमेमहि ॥ स्वस्त्ययनं [तार्क्ष्यमरिष्टनेमिं
महद्भूतं वायसं देवतानाम् । असुरघ्नमिन्द्रसखं
समत्सु बृहद्यशोनावमिवारुहेम ॥ अंहो मुचमाङ्गिरसं

गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयं नो अस्तु (कल्याणमस्तु) ॥ इतिकल्याणभद्रम् ॥

कनिक्रदत्तृचं प्रदक्षिणञ्जागतं मध्येऽतिशक्वर्यर्षिवैताभ्यामृषिरध्वनि[1] वाशमानं[2] शकुन्तं तुष्टाव कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छंस्तपस्तेपे तस्येन्द्र इव गाथीपुत्रो[3] जज्ञे गाथिनो विश्वामित्रः[4] स तृतीयं मण्डलमपश्यत् ॥

(कनिक्रददिति तृचं सूक्तं गृत्समदः शकुन्त इन्द्रस्त्रिष्टुप् ) ॥

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भवासि मा त्वा कचिदभिभा विश्व्या विदत् ॥ मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता । पित्र्या-

१ रे २ च्य ३ धी ४ धि

मनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह ॥

अव क्रन्ददक्षिणतो गृहाणा सुमङ्गलो भद्रवादी शकुन्ते। मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥

(प्रदक्षिणिदिति तृचं सूक्तं गृत्समदः शकुन्तो जगती तृतीयातिशक्कर्यष्टिर्वा)

प्रदक्षिणिदभिगृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः। उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि । वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने । भद्रमा वद विश्वतो नः शकुने पुण्यमा वद ॥ भद्रं वद दक्षिणतो भद्रमुत्तरतो वद। भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ॥ भद्रं वद पुत्रैर्भद्रं वद गृहेषु च। भद्र-

मस्माकं वद भद्रं नो अभयं वद ॥ भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद । भद्रं भद्रन्न आवद भद्रं नः सर्वतो वद ॥ असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि । अभयं सततं पश्चाद्भद्रमुत्तरतो गृहे ॥ यौवनानि महयसि जिग्युषामिव दुन्दुभिः । शकुन्तक प्रदक्षिणं शतपत्राभि नो वद ॥ आवदँस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सु मतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥

ऐन्द्रवायव्ये (वैश्वदेवाः सारस्वताः) द्यावापृथिव्यावन्त्यस्तृचो हविर्धाने वा तस्य तृतीयः पादो वाग्नेयोऽम्बितमे द्वेऽनुष्टुभौ बृहत्यष्टमी शेषं गायत्रम् ॥

इन्द्रश्च मृळयाति नो न नः पश्चादघं नशत् ।

भद्र भवाति नः पुरः ॥ इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून्विचर्षणिः ॥ विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥ तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः । एतं पिवत काम्यम् इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ॥ अम्बितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥ त्वे विश्वा सरस्वति श्रितायूँषि देव्याम् । शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढिनः ॥ इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति । या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥ प्रेतां यज्ञस्य शम्भुवा युवामिदा वृणीमहे । अग्निं च हव्यवाहनम् ॥ द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥ आ वा-

मुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोम-
पीतये ॥ (इतीन्द्र भद्रम्)

आ नो दश (गौतमो) वैश्वदेवन्तु द्वि त्रिष्टुबन्त-
माद्यास्तृचाः पंचमी सप्तमी जगत्यः षष्ठी विराट्-
स्थाना ॥

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो
अपरीतास उद्भिदः ॥ देवा नो यथा सदमिद्वृधे
असन्नप्रायुवो रक्षितारो दिवे दिवे ॥ देवानां भद्रा
सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् ।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र ति-
रन्तु जीवसे ॥ तान्पूर्वया निविदा हूमहे वयं भगं
मित्रमदितिं दक्षमस्रिधम् । अर्यमणं वरुणं सोमम-
श्विना सरस्वती नः सुभगा मयस्करत् ॥ तन्नो वातो
मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।

तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंयावा[1]नो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे[2] नो देवा अवसा गमन्निह ॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स

१ वा २ मा

पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ (इत्यानो भद्रम्)

अग्निर्वायुश्च सूर्यश्च वरुणः सामएवच ।
ब्रह्म राज्ञे रथश्चैवमित्यष्टावग्निभद्रकम्[1] ॥

अग्नये समनमत्पृथिव्यै समनमद्यथाग्निः पृथिव्या समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ वायवे समनमदन्तरिक्षाय समनमद्यथा वायुरन्तरिक्षेण समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ सूर्याय समनमद्दिवे समनमद्यथा सूर्यो दिवा समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ ( चन्द्रमसे समनमन्नक्षत्रेभ्यः समनमद्यथा चन्द्रमानक्षत्रैः समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ) ॥ वरुणाय समनमदद्भ्यः समनमद्यथा वरुणोऽद्भिः समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ साम्ने समनमदृचे



१ दश भद्राः प्रकीर्तिताः ॥

समनमद्यथा सामर्चा समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ ब्रह्मणे समनमत्क्षत्राय समनमद्यथा ब्रह्मक्षत्रेण समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ राज्ञे समनमद्विशे समनमद्यथा राजा विशा समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ रथाय समनमदश्वेभ्यः समनमद्यथा रथोऽश्वैः समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ ( प्रजापतये समनमद्भूतेभ्यः समनमद्यथा प्रजापतिर्भूतैः समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ) ॥ (इत्यग्नि भद्रम्॥)

भद्रो नो अग्निः सुहवो विभावसुर्भद्र इन्द्रः पुरुहूतः पुरुष्टुतः । भद्रः सूर्य उरुचक्षा उरुव्यचा भद्रश्चन्द्रमाः सँमिथेषु जागृविः ॥ भद्रः प्रजा अजनयन्नः प्रजापतिर्भद्रः सोमः पवमानो वृषा हरिः भद्रस्त्वष्टा विदधद्रूपाण्यद्भुतो भद्रो नो धाता वरि-

वस्यतु प्रजाः ॥ भद्रस्तार्क्ष्यः सुप्रजस्त्वाय नो महा-
नारिष्टनेमिः पृतना युधा जयन् । भद्रो वायुर्मातरि-
श्वा नियुत्पतिर्वेनो गयस्फान उषन्सदास्तु नः ॥
भद्रो मित्रो वरुणो रुद्र इद्वृधा भद्रोऽहिर्बुध्न्यो भु-
वनस्य रक्षिता । भद्रो नो वास्तोष्पतिरस्त्वमीवहा
भद्रः क्षेत्रस्य पतिर्विचर्षणिः ॥ भद्रो विभुर्विश्वकर्मा
बृहस्पतिर्भद्रो द्विषस्तपनो ब्रह्मणस्पतिः । भद्रः सुप-
र्णो अरुणो मरुत्सखा भद्रो नो वातो अभिवातु भे-
षजी । व २ ॥ भद्रो दधिक्रा वृषभः कनिक्रदद्भद्रः प-
र्जन्यो बहुधा विराजति । भद्रः सरस्वाँ उत नः सर-
स्वती भद्रोर्वशी भद्र इन्द्रः पुरूरवाः ॥ भद्रो नः पू-
षा सविता यमो भगो भद्रोऽजएकपादर्यमा मनुः ।
भद्रो विष्णुरुरुगायो वृषा हरिर्भद्रो विवस्वाँअभिवा-
तु नस्त्मना ॥ भद्रा गायत्री ककुबुष्णिहा विराड्भ-

१ श २ स्तु

द्रानुष्टुब्बृहती पङ्क्तिरस्तु नः। भद्रा नस्त्रिष्टुब्जगती पुरुप्रिया भद्रातिश्छन्दा बहुधा वि[1]भूवरी ॥ भद्रा नो राकानुमतिः कुहूः सुहृद्भद्रा सिनीवाल्यदितिर्मही ध्रुवा। भद्रा नो द्यौरन्तरिक्षं मयस्करं भद्रोशोदक्षस्तनयाय नस्तुजे ॥ भद्रो नः प्राणः सुमनाः सुवागसद्भद्रो अपानः सतनोस्सहात्मना। भद्रं चक्षुर्भद्रमिश्श्रोत्रमस्तु नो भद्रन्न आयुश्शरदो असश्छताम् ॥ व २ ॥ भद्रेन्द्राग्नी नो भवतामृतावृधा भद्रा नो मित्रावरुणा धृतव्रता। भद्राश्विना नो भवतां नवेदसा भद्रा द्यावापृथिवी वि[2]श्वशम्भुवा॥ भद्रा न इन्द्रावरुणारिषादसा भद्रा न इन्द्रा भवतां बृहस्पती। भद्रेन्द्राविष्णू सवनेष्वयावृधा भद्रेन्द्रासोमायुधि दस्युहन्तमा ॥ भद्राग्नाविष्णू विदथस्य प्रसाधना भद्रा नोऽग्नीन्द्रा वृषभा दिवस्पती। भद्रा



१ भु २ श्वा

नो अग्नीवरुणा प्रचेतसा भद्राग्नीषोमा भवता नवेद्सा ॥ भद्रा सूर्याचन्द्रमसा कविक्रतू भद्रा सोमा भवतां पूषणा नः । भद्रेन्द्रावायू पृतनास्वसासही भद्रा सूर्याग्नी अजिता धनञ्जया ॥ भद्रा नः सन्तु वसवो वसुप्रजा भद्रा रुद्रावृत्रहणा पुरन्धरा । भद्रा आदित्याः स्वपसः सुनीतयो भद्रा राजानो मरुतो विरप्सिनः ॥ व ३ ॥ भद्रा न ऊमाः सुहवाः शतश्रियो विश्वेदेवा मनवश्चर्षणीधृतः । भद्राः साध्या अभिभवः सूरचक्षसो भद्रा नः सन्त्वृभवो रत्नधातमा ॥ भद्राः सर्वे वाजिनो वाजसातयो भद्रा ऋषयः पितरो गभस्तयः । भद्रा भृगवोऽङ्गिरसः सुदानवो भद्रा गन्धर्वाप्सरसः सुदंससः ॥ भद्रा आपः शुचयो विश्वभृत्तमा भद्राः शिवा यद्मनुदो न ओषधीः । भद्रा गावः सुरभयो वयोवृधो भद्रा योषा उ-

१ सु २ हि ३ वासप्रदा ४ प्रिय

शतीर्देवपत्न्यः ॥ भद्राणि सामानि सदा भवन्तु नो भद्रा अथर्वाण ऋचो यजूंषि नः । भद्रा नक्षत्राणि शिवानि विश्वा भद्रा आशा अहुताः सन्तु नो हृदि ॥ संवत्सरा न ऋतवो मयोभुवो युवा[1] आयुवा[2]: सुसराण्युत क्षपाः । मुहूर्ताः काष्ठाः प्रदिशो दिशश्च सदा भद्राः सन्तु द्विपदे चतुष्पदे ॥ भद्रं पश्येम प्रचरेम भद्रं भद्रं वदेम शृणुयाम भद्रं । तन्नो मित्रो वरुणो मा महन्तामदितिः सिन्धुः पृथिवी उतद्यौः ॥

(इत्यशीति भद्रम्)

आग्नेय्यौ द्वे देवीनामेकेन्द्राणीवरुणान्यग्नायीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वा गायत्री ॥

अभि नो देवीरवसा महः शर्मणा नृपत्नीः । अच्छिन्नपत्राः सचन्ताम् ॥ इहेन्द्राणीमुप ह्वये वरु-

१ यो २ यो

गानीं स्वस्तये । अग्नायीं सोमपीतये ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे ॥ स्योना पृथिवी भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ व १ ॥ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः ॥ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पांसुरे ॥ त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे । इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपण्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ( इति विष्णुभद्रं स्वस्त्ययनं समाप्तम् ) ॥

कलशे पुष्पत्रयम्

ॐ गायत्र्यै नमः ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ ३

क्षेत्रपालयोरक्षतम् अश्वमेधे घोराणामार्षम् ॥

द्रष्ट्रे नम उप द्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः श्रान्ताय नमस्तपसे नमः ॥

कलशे पुष्पम् भूतं भव्यं भविष्यद्वषट्स्वाहा नम ऋक्सामयजुर्वषट्स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा(नमोऽग्निर्वायुः सूर्यो वषट्स्वाहा)नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः पिता पुत्रा पौत्रो वषट्स्वाहा नमः प्रा-



१ क्शा

णो व्यानोऽपानो वषट्स्वाहा नमो भूर्भुवः स्वर्[1]वषट् स्वाहा नमः ॥

योविश्वचक्षुरुत विश्वतो मुखो[2] विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमते सं[3]य्यजत्रैर्द्यावा पृथिवी जनयन्देव एकः ॥ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामस्[4]स्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानुड्वानाशुः सप्तिर्जिष्णू रथेष्ठाः पुरन्धिर्योषा सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो[5] न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

इषे त्वोर्जेति ब्रह्मणः (सर्ववेदो ब्रह्मणः)॥

इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण[6] आप्यायध्वमघ्न्या देवभागं प्रजावतीरनमीवा अयक्ष्मा[7] मा व[8]स्तेन ईश-



१ सुवर्व २ ति ३ संपतत्रैः ४ मा ५ तीर्न ६ णे ७ क्ष्माः ८ वःस्ते

कलशे पुष्पत्रयम्

ॐ गायत्र्यै नमः ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ ३

क्षेत्रपालयोरक्षतम् अश्वमेधे घोराणामार्षम् ॥

द्रष्ट्रे नम उप द्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः श्रान्ताय नमस्तपसे नमः ॥

कलशे पुष्पम् भूतं भव्यं भविष्यद्वषट्स्वाहा नम ऋक्सामयजुर्वषट्स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा (नमोऽग्निर्वायुः सूर्यो वषट्स्वाहा) नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः पिता पुत्रा पौत्रो वषट्स्वाहा नमः प्रा-



१ क्षा

णो व्यानोऽपानो वषट्स्वाहा नमो भूर्भुवः स्[1]वर्वषट् स्वाहा नमः ॥

योविश्वचक्षुरुत विश्वतो मुखो[2] विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमते [3]संय्यजत्रैर्द्यावा पृथिवी जनयन्देव एकः ॥ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायताम[4]स्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिर्जिष्णू रथेष्ठाः पुरन्धिर्योषा सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो[5] न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

इषे त्वोर्जेति ब्रह्मणः (सर्ववेदो ब्रह्मणः)॥

इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण[6] आप्यायध्वमघ्न्या देवभागं प्रजावतीरनमीवा अय[7]क्ष्मा मा व[8]स्तेन ईश-



१ सुवर्व २ ति ३ संपतत्रैः ४ मा ५ तीर्न ६ णे ७ क्ष्माः ८ वःस्ते

त माघशँसः परि वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अ-
स्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि य-
जमानस्य पशुपा असि ॥ देवस्य त्वा सवितुः प्रस-
वेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे [1]घोषदासि
प्रत्युष्टं रक्षः प्रत्युष्टा[2]रातिः प्रेयमगाद्धिषणा बर्हिरच्छ
मनुना कृता स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य
परिषूतमसि माधो मोपरि परुस्त ऋध्वया स मा च्छेता
[3]ते मा रि[4]षत् देवबर्हिः शतवल्शं विरोह सहस्रवल्शा
वि वयं रुहेम अदित्या रास्नासीन्द्राण्याः सन्नहनं पूषा
ते ग्रन्थिं ग्रथ्नातु स ते मा स्थादिन्द्रस्य त्वा बाहु-
भ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्ना हरामि देवङ्गममसि
तदाहरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरा-
सदे ॥ वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि
सहस्रधारम् अयक्ष्मा वः प्रजया संसृजामि रायस्पो-

१ गो २ रातयः ३ ति ४ षम्

षेण बहुला भवन्तीः मधुमद्घृतवत्पिन्वमाना जीवा जीवन्तीरुप वः सदेव मातरिश्वनो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधायाः परेण धाम्ना हुतासि मा ह्वाः सा विश्वायुः सा विश्वव्यचाः सा विश्वधायाः हुत-स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावा-पृथिवीभ्यां सम्पृच्यध्वमृतावरीऊर्मिणी[1]र्मधुमत्तमा[2] मन्द्रा धनस्य सातये इन्द्रस्य त्वा भागं सोमेनातन-च्म्यदस्तमसि विष्णवे विष्णो हव्यँ रक्षस्वापो जा-गृत ॥

महि त्रीणामवोऽस्तु द्युक्षं[3] मित्रस्यार्यम्णः । दु-राधर्षं वरुणस्य ॥ नहि तेषाममा चन नाध्वसु वार[4]-णेषु । ईशे रिपुरघशँसः येस्मै[5] पुत्रासो अदितेः प्र-जीवसे मर्त्याय ज्योतिर्यच्छन्त्यजस्रम् ॥ सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥



१ णा २ माः ३ म्नं ४ व ५ तेहि

यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥ मा नः शँसो अररुषो धूर्तिः प्राणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥

प्रणीतपात्रे पुष्पत्रयम् । सं वः सृजामि हृदयं संसृष्टं मनो अस्तु वः । संसृष्टा स्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ सं यावः प्रियास्तन्वः[1] सं प्रिया हृदयानि वः । आत्मा वो अस्तु सं प्रियः सं प्रियास्तन्वो[2] मम ॥

विष्टरेण प्रणीतपात्रजलेन कलशे जीवादानम् ॥ अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्धेहि ॥ इन्द्रस्य प्राणः स ते प्राणं ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥ पितॄणां प्राणास्ते ते प्राणं ददतु येषां प्राणास्तेभ्यो वः स्वाहा ॥ मरुतां प्राणास्ते ते प्राणं ददतु येषां प्राणास्तेभ्यो वः स्वाहा ॥ विश्वेषां देवानां प्राणास्ते ते प्राणान्ददतु येषां प्राणास्तेभ्यो वः स्वाहा ॥ प्रजापतेः



१ तनुवः २ तनुवो

परमेष्ठिनः प्राणः स[❀] ते प्राणान्ददातु ययोः प्राणस्ता-
भ्यां वां स्वाहा ॥ यदसर्पस्तत्सर्पिरभवो यन्नवमैस्तन्न-
वनीतमभवोयदध्रियथास्तद्घृतमभवः । घृतस्य धा-
राममृतस्य पन्थामिन्द्रेण दत्तां[1] प्रयतां[2] मरुद्भिः तत्त्वा
विष्णुरनुपश्यत्तत्त्वेळा गव्यैरयत् ॥ पावमानेन त्वा
स्तोमेन गायत्र्या वर्तन्योपाँशोर्वीर्येणोद्धराम्यसौ ॥
बृहता त्वा रथन्तरेण त्रिष्टु[3]भावर्तन्या शुक्रस्य वीर्ये-
णोत्सृजाम्यसौ ॥ अग्नेस्त्वा मात्रया जगत्या वर्तन्या
देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्याया असौ ।
देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेषामयमायुषा-
युष्मानस्त्वसौ ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्या-
यमायुषायुष्मानस्त्वसौ ॥ अग्निरायुष्मान्स वनस्प-
तिभिरायुष्माँस्तस्यायमायुषायुष्मानस्त्वसौ ॥ यज्ञ
आयुष्मान्स दक्षिणाभिरायुष्माँस्तस्यायमायुषायु-



❀ तौ ते प्राणन्दत्तां १ त्तं २ तं ३ भा

ष्मानस्त्वसौ ॥ सोम आयुष्मान्स ओषधीभि[1]रायुष्माँस्तस्यायमायुषायुष्मानस्त्वसौ ॥ ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्तासामयमायुषायुष्मानस्त्वसौ ॥ इममग्ने[2] आयुषे वर्चसे कृधि तिग्ममोजो वरुण सं शिशाधि ॥ मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथा सत् ॥ अश्विनोः प्राणस्तौ ते प्राणं दत्तां तेन जीव मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव बृहस्पतेः प्राणः स ते प्राणं ददातु तेन जीव ॥

अथ रक्षोघ्नमन्त्राः
तिलाक्षतक्षेपणं दशदिक्षु

पूर्वे ये देवाः पुरः सदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥

दक्षिणे ये देवाः दक्षिणात्सदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥



१ धि २ ग्ने

पश्चिमे ये देवाः पश्चात्सदो मरुन्नेत्रा रक्षोहणास्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥

उत्तरे ये देवा उत्तरात्सदो मित्रावरुणनेत्रा रक्षोहणास्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥

ऊर्ध्वे ये देवा उपरिषदः सोमनेत्रा [1]अवस्वदन्तो रक्षोहणास्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥

आग्नेये [2]इदमहं रक्षोभिः समूहाम्यग्ने सन्दह रक्षः सन्दग्धं रक्षोघ्नये पुरः सदे रक्षोघ्ने स्वाहा ॥

नैर्ऋते यमाय दक्षिणात्सदे रक्षोघ्ने स्वाहा ॥

वायव्ये मरुद्भ्यः पश्चात्सद्भ्यो रक्षोहभ्यः स्वाहा ॥

ईशाने मित्रावरुणाभ्यामुत्तरात्सद्भ्यां रक्षोहभ्यां स्वाहा ।

ऊर्ध्वे भूमौच सोमायोपरिषदे वस्वदुते रक्षोघ्ने स्वाहा ॥

इति रक्षोघ्नमन्त्राः ॥

---

१ दुवस्वन्तो २ इदमहमिति पंचभिरात्मनः पूर्वादिदिक्षु तिलाक्षतक्षेपणं कुर्यादितिपुस्तकान्तरे

अथ द्रव्य शोधनम् ॥

रथः पञ्चवाही दक्षिणा ॥

ब्राह्मण शोधनम् आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

जल शोधनम् आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥

पुष्प शोधनम् पुष्पवतीः प्रसुमतीः फलिनीरफला उत अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥

गन्ध शोधनम् गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥

अक्षत शोधनम् कर्मणे वां वानस्पतिरसि प्रत्युष्टं रक्षः प्रत्युष्टाः रातिः उर्वन्तरिक्षं वीहि ॥

---

१ म

कुशा शोधनम् धूरसि धूर्व धूर्वन्तं योऽस्मान्धूर्वति तं धूर्व यं व-
यं धूर्वाम स्तं च धूर्व । देवानामसि वह्नितमँ सस्नितमं
पप्रितमं जुष्टतमं देवहूतमम् ॥ विष्णोः क्रमोऽसि
अहुतमसि हविर्धानं दृँहस्व मा ह्वार्मित्रस्य[1] त्वा चक्षु-
षा प्रेक्षे उरु त्वा वाताय ॥

धूप शोधनम् वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वत्
रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत् आदि-
त्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वत् विश्वे
त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिर-
स्वत् ॥ इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु । वि-
ष्णुस्त्वा धूपयतु ॥

सूर्ये गन्धार्घपुष्पाणि उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥

दीपे गन्धार्घपुष्पाणि तेजोऽसि शुक्रमसि ज्योतिरसि धामासि

---

१ न्मि

प्रियं देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि ( यज्ञेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि )

स्वललाटे तिलकम् अध्वर्योऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय। विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देव यज्ञ ॥

स्वशिरसि अर्घपुष्पाणि इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः[1] । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमु[2]धारय ॥

स्वासने दर्भकाण्डद्वयम् इममिन्द्रो अदीधरद्ध्रुवं ध्रुवेण हविषा हविः[3]। तस्मै सोमो अधि ब्रुवत्तस्मा उ ब्रह्मणस्पतिः ॥

पृथिव्यास्तिलकार्घ पुष्पाणि दर्भकाण्डद्वयम् ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता[4] इमे। ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥

आकाशे तिलकाक्षतपुष्पाणि मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः ॥ बळित्था पर्वतानां[5]खिद्रं बिभर्षि पृथिवि प्र या भूमिं प्रवत्वति[6] मह्ना

---

१ लत् २ राष्ट्रं ३ [ हविः ] इत्यधिकम् ४ यम् ५ चेत्त्र ६ त्त्व

जिनोषि[1] महिनि ॥ इति द्रव्यशोधनम्

---

अथ कलशे द्वारदेवस्थापनम्

गणेशस्थापनम्
अधः स्व वामकोणे गन्धार्घपुष्पाणि

नि षु सीद गणपते गणेषु[2] त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवञ्चित्रमर्च ॥

कुमारस्थापनं
स्व दक्षिणकोणे ग० पु०

कुमारं माता युवतिः समुब्धं[ग] गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥

महालक्ष्मी स्थापनम्
मध्ये स्व वामशाखायां ग०पु०

अश्वपूर्वां[3] रथमध्यां हस्तिनादप्रमोदिनीम्[4] । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ कांस्यस्मितां[5] हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहो-

---

❀ गणेशं दक्षिणे वामे कुमारं मध्यतः श्रियम् । तदूर्ध्वे विश्वकर्माणं पूजयेद्द्वारदेवताः ॥
मण्डूकप्लुतन्यायेन षण्णां पञ्च विधीयते । एकत्र वाक्च लक्ष्मीश्च ह्येवं वेदानुशासनम् ॥

---

१ नु २ श ÷ ग्धं ३ र्णां ४ बो ५ सो

पह्वये श्रियम् ॥

सरस्वती स्थापनम्
मध्ये स्व दक्षिणशाखायां ग० पु०

( इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः । पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ) ॥

विश्वकर्म स्थापनम्
ऊर्ध्व कोण द्वये ग० पु०

विश्वकर्मा विश्वदेवो विश्वाजिद्विश्वदर्शतः । ते त्वा घृतस्य धारया श्रैष्ठ्याय समसूषत ॥

कलशदेव स्थापनम् ॥

कलशे
पुष्पाणि

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणाँ[1] स्वधितिर्वनानाँ सोमः पवित्रमत्येति रेभन् ॥ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो

[1] ध्रा

आद्यन्त कुटिल रेखांकितो मन्त्रः केनापि स्वपुस्तके क्षिप्तः

रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥

चतुर्वेदेश्वर स्थापनम् ॥

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ इषे त्वोर्जे त्वा वायवः[1] स्थोपायवः[2] स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥

पितृर्चा

आहं पितृन् सु विदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥

१ व २ व

मासपति स्थापनम् ॥

वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥

प्रधानानि ॥ ✤

तद्विष्णोः परमं पदं ० ॥ वासुदेवाय नमः ॥ ८ ॥
यो रुद्रो अग्नौ ० ॥ भवाय देवाय नमः ॥ ८ ॥
गणानां त्वा गणपतिं ० ॥ विनायकाय नमः ॥ ८ ॥
चित्रं देवानां ० ॥ ह्रां ह्रीं सः सूर्याय नमः ॥ ८ ॥
जातवेदसे ० ॥ अमायै नमः ॥ ८ ॥
यत इन्द्र भयामहे ० ॥ अभयङ्करी देव्यै नमः ॥
इह राष्ट्राधिपतये अमुक भैरवाय नमः ॥

✤ कुम्भं सफलं विशेषदेवतामन्त्रमान्त्रितैः । पुष्पैर्यवाक्षतैर्वापि पूजयेद्विधिपूर्वकम् ॥

❀
दश दिक्पाल स्थापनम् ॥

पूर्वे इन्द्र स्थापनम् इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः । वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता[1] ॥

अग्निकोणे अग्निस्थापनम् अग्निः सप्तिं वाजम्भरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठम्[❀] । अग्नी रोदसी वि चरत्समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरन्धिम्[3] ॥

दक्षिणे यमस्थापनम् यमो दाधार पृथिवीं यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम् ॥

नैर्ऋते निर्ऋतिस्थापनम् यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचर्त्यम्[4] । तं ते विष्याम्यायुषो नु[5] मध्येथा विषितः पितुमऽद्धि प्रमुक्तः ॥

पश्चिमे वरुणस्थापनम् उदुत्तमं वरुण पाशमस्मदवाधमं वि म-

---

❀ ग्रहाणां स्थापनं कुर्याद्दिक्पालानां च वैक्रमात् । जातीफलैरक्षोटैर्वा पञ्चबीजैस्तथापिवा ॥ द्वौ द्वौ फलौ ग्रहाणां वै ह्येकमेकं दिशाभुजाम् ॥

---

१ न्ताम् २ धा ३ न्धिं ४ चू ५ नो ❀ ष्ठां

ध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥

वायव्ये वायुस्थापनम् वायवायाहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम् ॥

उत्तरे कुवीरस्थापनम् सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं[1] वितथ्यं[2] सभेयं पितृश्रवणं यो ददाश तस्मै ॥ राजाधिराजाय प्रसह्य साधने नमो वयं वैश्रवणाय कुर्महे स मे कामान्कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु । कुवेराय वैश्रवणाय महाराजाय वै नमो नमः ॥

ईशाने रुद्रस्थापनम् ईशानं त्वा शुश्रुमा वयं धनानां धनपते गोमदग्ने अश्ववद्भूरिपुष्टं हिरण्यवदन्नवद्धेहि सह्यम् ॥ दुहान्ते द्यौः पृथिवी पयो जगरस्त्वा सोदको विसर्पतु । प्रजापतिनात्मानमाप्रीणोऽरिक्तो म

---

[1] ध [2] द

आत्मा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥

ईशानपूर्वयोर्मध्ये ब्रह्मस्थापनम् ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥

नैर्ऋतपश्चिमयोर्मध्ये विष्णुस्थापनम् वषट्ते विष्णावास[1] आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥

कुलनाग स्थापनम् ॥

कलशे पुष्पाणि नमो अस्तु सर्पेभ्यो ये के च पृथिव्यामधि । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ येषु वा यातुधाना ये वा वनस्पतीरनु । येऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ ये वादो रोचने दिवो ये वा

---

१ आ

सूर्यस्य रश्मिषु । येऽप्सु सदांसि चक्रिरे तेभ्यः सर्पेभ्यो नमः ॥ धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥

---

ग्रह स्थापनम् ॥

मध्ये चक्राकारे अग्न्यादित्यस्थापनम् अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥

अग्नि कोणे चक्राकारे वरुणचन्द्रस्थापनम् एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् । स नः शर्म त्रिवरूथं[1] वि यंसत्पातं नो द्यावापृथिवी उपस्थे ॥ या ते धामानि

---

१ थो

दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेळन्राजन्[1]सोम प्रति हव्या गृभाय ॥

दक्षिणे चतुष्कोणे कुमारभोमस्थापनम्

तँ युवं[2] देवावश्विना[3] कुमारं साहदेव्यम् । दीर्घायुषं कृणोतन ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाँ रेताँसि जिन्वति ॥

ईशाने त्रिकोणे विष्णुबुधस्थापनम्

वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥

बोधा सु[4] मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् । इमा ब्रह्म सधमादे जुषस्व ॥

उत्तरे त्रिकोणे इन्द्रावृहस्पतिस्थापनम्

त्रातारमिन्द्रमवितारमिन्द्रँ हवे हवे सुहवँ शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रँ स्वस्ति नो मघवा धात्विन्द्रः ॥ बृहस्पते अति यदर्यो

१ न्त्सो २ वां ३ नौ ४ स्व

अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस-र्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥

पूर्वे चतुष्कोणे सरस्वतीशुक्रस्थापनम्

सरस्वतीं देवयन्तो हवन्ते सरस्वती-मध्वरे तायमाने सरस्वतीं स्वकृतो अह्वयन्ते[1] सर-स्वती दाशुषे वार्यं[2] दात् ॥ अन्नात्परिस्रुतो रसँ ब्र-ह्मणा व्यपिबत्क्षत्रम् । ऋतेन सत्यमिन्द्रियं विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥

पश्चिमे जालान्तरे प्रजापतिशनैश्चरस्थापनम्

प्रजापते न हि त्वदन्य एता विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ शं नो देवीर-भिष्टय आपो भवन्तु पीतये । शँयोरभि स्रवन्तु नः ॥

नैर्ऋते यवाकारे गणपतिराहुस्थापनम्

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मण-स्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

---

१ हवन्ते २ वार्यान्धात् ( वार्यं धात् )

कया नश्चित्र आ भुवदूती सदावृधः सखा। कया शचिष्ठया वृता ॥

वायवे ध्वजाकारे रुद्रकेतुस्थापनम् आ वो राजानमध्वरस्य रुद्रं होतारं सत्यधजं[1] रोदस्योः। अग्निं पुरा तनयित्नोरचित्ताद्धि[2]रण्यरूपमवसे कृणुध्वम् ॥ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः ॥

उत्तरे पक्षिरूपे ब्रह्मध्रुवस्थापनम् को अद्य युङ्क्ते धुरि गा ऋतस्य शि[3]मीवतो भामिनो दुर्हणायून्। आसन्निषून्हृत्स्वसो मयो भून्य एषां भृत्यामृणधत्स जीवात् ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयम्[4] ॥

दक्षिणे कुम्भरूपे अनन्तागस्त्यस्थापनम् आदित्यं गर्भं पयसा समञ्ज[5]न्सहस्रस्य प्रतिमाँ विश्वरूपम्। परिवृङ्धि हरसा माभिसंस्थाः शतायुषं कृणुहि चीयमानः ॥ अगस्त्यः खनमानः

---

१ देवयजं २ त्नु ३ मि ४ मसि ५ ङ्धि

खनित्रैः प्रजामपतिं बलमिच्छमानः । उभौ वर्णा-
वृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥

वास्तुष्पतिस्थापनम्

कलशे पुष्पाणि अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥ वास्तोष्पते प्रति जानी-
ह्यस्मान्त्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे[1] प्र-
ति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥
वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वे-
भिरिन्दो अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति
नो जुषस्व ॥ वास्तोष्पते शग्मया संसदा[2] ते स-
क्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे
वरं नो यूयं पात स्वस्तिभिः सदा नः ॥

उपदेवस्थापनम्

कलशे पुष्पाणि राकामहं सुहवां सुष्टुतीं[3] हुवे शृणोतु नः

---

१ हि २ शं ३ ती

सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमा-
नया ददातु[1] वीरं शतदायमुक्थ्यम् ॥ यास्ते राके सु
मतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभि-
र्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥
सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व
हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ या सुबाहुः
स्वंगुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सि-
नीवाल्यै जुहोतन ॥ या गुंगूर्या सिनीवाली या राका
या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥
इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । नह्यस्या
अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥
नाहमिन्द्राणि[2] रराण[3] सख्युर्वृषाकपेर्ऋते । यस्येदमप्यँ
हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥
कुहूमहँ सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवी-

१ धा २ णी ३ रारण

मि । या नो ददाति श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥ कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । स्वसा देवानां महयन्त्य-स्मे रायस्पोषं चिकितुषे दधातु ॥ धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ प्रजापतीरमयतु प्रजा इह धाता दधातु सुमनस्य-मानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पु-ष्टिपतिर्दधातु ॥

॥ देवासुराणामार्षम् ॥

तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः । इन्द्रेण युजा तमसा परीवृतं बृहस्पते नि-रपामौब्जो अर्णवम् ॥ बृहस्पते अति यदर्यो अर्हा-द्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ बृहस्पतिः समज-

१ रि

यद्वसूनि महोब्रजान्गोमतो देव एषः। अपः सिषा- सन्त्स्वरप्रतीतो बृहस्पतिर्हन्त्यामित्रमर्कैः ॥ यमो दाधार पृथिवीं यमो द्यामुत सूर्यम्। यमाय सर्वमि- त्तस्थे यत्प्राणद्वायुरक्षितम् ॥ यथा पञ्च यथा षड्य- था पञ्च दशर्षयः। यमं यो विद्यात्स[1] ब्रूयाद्यथैकर्षि- र्वि जानते ॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृह- त्। गायत्री त्रिष्टुप्छन्दाँसि सर्वा ता यम आहिता ॥ मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छं च योश्च मनुरायेजे पिता तद- श्याम तव रुद्र प्रणीतिषु ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः[2]। सुम्ना यन्नि- द्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥ त्वेषं वयँ रुद्रं यज्ञसाधनं वङ्कुं[3] कविमवसे नि ह्व- यामहे। आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्व-

१ त्सो २ म्रुऽद्वि ३ अङ्कुं

यमस्या वृणीमहे ॥ अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्रचेता[1] राजन्नेनाँसि शिश्रथः कृतानि ॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथय[2] । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ इमं मे वरुण श्रुधी हवमद्या[3] च मृळय त्वामवस्युराचके ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥

॥ महाव्याहृतयः प्रजापतेः ॥

ॐ भूर्लोकाय नमः[4] । ॐ भुवोलोकाय नमः । ॐ स्वर्लोकाय नमः । ॐ भूर्भुवः स्वर्लोकाय नमः ।

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेताँसि जिन्वति ॥ उभा वामिन्द्राग्नी आहुवध्या

१ तो २ था ३ ध्या ४ स्वाहा

उभा राधसः सह मादयध्यै । उभा दातारविषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥ अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे ॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥

॥ स्तोमोदेवानाम् ॥

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ आरुणेः ॥ कदाच नस्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥ परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथि-

ष्टमुप यामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा सरिषः पातु नक्तम् ॥ प्रत्यग्ने हरसा हरः शृणीहि[1] विश्वतः प्रति । यातुधानस्य रक्षसो बलं वि रुज वीर्यम् ॥ यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तं न ऊतिभिर्विद्विषो विमृधो जहि ॥ ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुषदो[2] महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥

क्षेत्रपालस्थापनम् ॥

क्षेत्रपालयोरक्षतम् क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्वा स नो मृळाती दृशे ॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सु पूतमृतस्य नः पतयो मृळयन्तु ॥ मधुमतीरोषधीर्द्याव आपो मधुमन्नो[3] भवत्वन्तरि-

---

१ श्रि २ क्षितो ३ मान्नो

त्तम् । क्षेत्रस्य पतिर्मधुमानो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ उर्वीरोदसी वरिवः कृणोतु क्षेत्रस्य पत्नीरधिवोचतं नः । तौ मे द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः ॥ यो ह वै देवान्साध्यान्वेद सिध्यत्यस्मादेमिमावलोकाः । देवाः साध्याः सिद्धं ह्यस्यै सिद्धमस्मै सिद्धममुष्यै य एवं वेद सिद्ध्यत्यस्मै

सर्वदेव स्थापनम् ।

यो विश्वचक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमते[1] संय्यजत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ यस्य व्रतमुप तिष्ठन्त आपो यस्य व्रते पशवो यन्ति सर्वे । यस्य व्रते पुष्टिपति-

---

१ ति २ पतत्रैः

निविष्टस्तं सरस्वन्तमवसे जोहवीमि ॥ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् । अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥ सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो अह्वयन्ते[1] सरस्वती दाशुषे वार्यं[2] दात् ॥ सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न आ धक् । जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥ पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥ चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥

१ हवन्ते २ वार्यान्धात् वार्यंधात्

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्[1]। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥ जातवेदसे सुनवाम सोममरातीयतो[2] नि दहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे। ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः॥ मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्। ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम्॥ स सुष्टुभा स ऋक्वता गणेन बलँ रुरोज फलिगँ रवेण। बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत्॥ एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा[3] हविर्भिः। बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम्॥

१ रयिपोषणम् २ ति ३ हविषा

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ। ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवञ्च धेहि॥ यत्र वेत्थ वनस्पते देवानां गुह्या नामानि। तत्र हव्यानि गामय॥ अन्विदनुमते त्वं मन्यासै शं च नस्कृधि। इषं तोकाय नो दधः प्र ण आयूँषि तारिषः॥ यत्ते नाम सुहवं सु प्रणीतेऽनुमतेऽनुमतं सदा नु। तेन त्वं सुमतिं दिव्यं मे इषं पिन्वं विश्ववारं सुवीराम्॥

अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि। यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते॥

कलशे पुष्पत्रयम् ओं भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओं॥ ३॥

कलशे पुष्पद्वयम् तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्॥ तद्विप्रासो विपण्यवो जागृ-

वांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥

कलशे पुष्पम् ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्यन्ति शूराः । तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ ॥

॥ ततो नैवेद्यम् ॥

अमृतेशमुद्रयाऽमृतीकृत्य अमृतमस्तु अमृतायतां नैवेद्यम् । सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वारदेवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चतुर्वेदेश्वराय सानुचराय मासपतये नारायणाय ॥ मार्गशीर्षे रुक्मिणीसहिताय कृष्णाय श्रीसहिताय केशवाय ॥ पौषे प्रियासहितायानन्ताय वागीश्वरीसहिताय ना-

रायणाय ॥ माघे प्रीतिसहितायाच्युताय कान्तास-
हिताय माधवाय ॥ फाल्गुणे शक्तिसहिताय चक्रि-
णे क्रियासहिताय गोविन्दाय ॥ चैत्रे सिद्धिसहिता-
य वैकुण्ठाय शक्तिसहिताय विष्णवे ॥ वैशाखे श्री-
सहिताय जनार्दनाय विभूतिसहिताय मधुसूदनाय ।
ज्यैष्ठे महिमासहितायोपेन्द्राय इच्छासहिताय त्रिवि-
क्रमाय ॥ आषाढे लक्ष्मीसहिताय यज्ञपुरुषाय प्री-
तिसहिताय वामनाय ॥ श्रावणे कान्तिसहिताय वा-
सुदेवाय रतिसहिताय श्रीधराय ॥ भाद्रपदे प्राप्ति-
सहिताय हरये मायासहिताय हृषीकेशाय ॥ आ-
श्वयुजे प्राकाम्यासहिताय वागीश्वराय धीसहिताय
पद्मनाभाय ॥ कार्तिके लघिमासहिताय पुण्डरीका-
क्षाय महिमासहिताय दामोदराय ॥ मलिम्लुचे श-
क्तिसहिताय योगीशाय सत्यभामासहिताय नर-

कारये ॥ निष्कलासहिताय महामार्तण्डाय ॥ दुर्गा-
यै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादि-
भ्यः पितृगणदेवताभ्यः । भगवते वासुदेवाय सङ्कर्ष-
णाय प्रद्युम्नाय अनिरुद्धाय सत्याय पुरुषाय अच्यु-
ताय माधवाय गोविन्दाय सहस्रनाम्ने विष्णवे ल-
क्ष्मीसहिताय नारायणाय ॥ भगवते भवाय देवाय
शर्वाय देवाय रुद्राय देवाय पशुपतये देवाय उग्राय
देवाय भीमाय देवाय ईशानाय देवाय ईश्वराय
देवाय महादेवाय पार्वतीसहिताय परमेश्वराय ॥
भगवते विनायकाय एकदन्ताय कृष्णपिङ्गलाय
गजाननाय लम्बोदराय बालचन्द्राय हेरम्भाय
आखुरथाय विघ्नेशाय विघ्नभक्ष्याय वल्लभासहिताय
महागणेशाय ॥ भगवते क्लींकांकुमाराय षण्मुखाय
मयूरवाहनाय पार्वतीनन्दनाय सेनाधिपतये कुमा-

राय ॥ भगवते ह्रांह्रींसः सूर्याय सप्ताश्वाय अना-श्वाय एकाश्वाय नीलाश्वाय प्रत्यक्षदेवाय तेजोरूपा-य परमार्थसाराय प्रभासहिताय आदित्याय ॥ भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशा-रदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगव-त्यै ❀ वितस्ताभगवत्यै गङ्गाभगवत्यै यमुनाभगवत्यै सिद्धलक्ष्म्यै महालक्ष्म्यै महात्रिपुरसुन्दर्यै सह-स्रनाम्न्यै देव्यै भवान्यै अभयङ्कर्यै देव्यै भवान्यै क्षेमङ्कर्यै भवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिप-तये अमुकभैरवाय ॥ इन्द्राय सुराधिपतये वज्र-हस्ताय शचीसहिताय ॥ अग्नये तेजोऽधिपत-ये शक्तिहस्ताय स्वाहासहिताय ॥ यमाय प्रेताधिपतये दण्डहस्ताय यामीसहिताय ॥

---

❀ भीडाभगवत्यै वैखरीभ० जयाभ० विजयाभ० तोतुलाभ० शैलाभ०

नैर्ऋतये रक्षोऽधिपतये खड्गहस्ताय दितिसहिताय ॥ वरुणाय जलाधिपतये पाशहस्ताय वारुणीसहिताय ॥ वायवे जीवाधिपतये ध्वजहस्ताय प्राणशक्तिसहिताय ॥ कुवेराय यक्षाधिपतये गदाहस्ताय यक्षिणीसहिताय ॥ ईशानाय सर्वाधिपतये त्रिशूलहस्ताय उमासहिताय ॥ ब्रह्मणे वेदाधिपतये पद्महस्ताय गायत्रीसहिताय ॥ विष्णवे त्रैलोक्याधिपतये चक्रहस्ताय लक्ष्मीसहिताय ॥

अनन्तादिभ्यः अष्टाभ्यः कुलनागदेवताभ्यः अग्न्यादित्याभ्यां वरुणचन्द्रमोभ्यां कुमारभौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशुक्राभ्यां प्रजापतिशनैश्चराभ्यां गणपतिराहुभ्यां रुद्रकेतुभ्यां ब्रह्मध्रुवाभ्यां अनन्तागस्त्याभ्यां ॥ ब्रह्मणे

कूर्माय ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै ॥
शिख्यादिभ्यः पञ्चचत्वारिंशद्वास्तुदेवताभ्यः । ब्राह्म्यादिभ्यो मातृभ्यः । गौर्यादिभ्यो मातृभ्यः ।
ललितादिभ्यो मातृभ्यः । दुर्गाक्षेत्रगणेश्वरदेवताभ्यः । राकादेवताभ्यः । त्रिकादेवताभ्यः । सिनीवालीदेवताभ्यः । कुहूदेवताभ्यः । यामीदेवताभ्यः रौद्रीदेवताभ्यः । ऐन्द्रीदेवताभ्यः । वारुणीदेवताभ्यः । बार्हस्पत्यदेवताभ्यः । ओंभूर्देवताभ्यः । ओंभुवर्देवताभ्यः । ओंस्वर्देवताभ्यः । ओंभूर्भुवः स्वर्देवताभ्यः । अखण्डब्रह्माण्डदेवताभ्यः । धूर्भ्यः उपधूर्भ्यः महागायत्र्यै सावित्र्यै सरस्वत्यै हेरुकादिभ्यो वटुकादिभ्यः (तण्डुलदधिमधुमात्रामधुपर्कं) नैवेद्यं निवेदयामि नमः ॥

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक

आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवा-
य हविषा विधेम ॥ १ ॥ यः प्राणतो निमिषतश्च
राजा पतिर्विश्वस्य जगतो बभूव । ईशे यो अस्य
द्विपदश्चतुष्पदः कस्मै० ॥ २ ॥ य ओजोदा बलदा
यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्यच्छा-
यामृतं यस्य मृत्युः कस्मै० ॥ ३ ॥ येन द्यौरुग्रा पृथि-
वी दृढा येन स्वः स्तम्भितं येन नाकम्[1] । यो अ-
न्तरिक्षं विममे वरीयः कस्मै० ॥ ४ ॥ य इमे द्यावा-
पृथिवी तस्तभाने अधारयद्रोदसी रेजमाने । य-
स्मिन्नधि विततः सूर एति कस्मै० ॥ ५ ॥ यस्येमे
विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः[2] ।
दिशो यस्य प्रदिशः पञ्च देवीः कस्मै० ॥ ६ ॥
आपो ह यन्महतीर्विश्वमायन्गर्भं दधाना जनयन्ती-
रग्निम् । ततो देवानां निरवर्ततासुरेकः कस्मै० ॥७॥

---

१ कः २ स आहुः

आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु[1] ॥ ८ ॥

अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि । अग्नेअर्चन्त[2] ऊतये ॥ अर्चत प्रार्चत प्रियमेधासो अर्चत । [*]अर्चन्तु पुत्रका उत पुरं न धृष्ण्व[3]र्चत ॥ ॥

इति कलशयागादिप्रतिष्ठोपयोगि
ऋचकं समाप्तम् ॥

---

१ ह २ त ३ ष्णुमर्चत । ✽ अर्चत उत पुनर्विष्णो अर्चत पुत्रकामा सो अर्चत अर्चत ॥

॥ ओ३म् ॥

# ॥ अथ नवग्रहसूक्तानि ॥

॥ अग्न्यादित्याभ्यां नमः ॥



ओं ॥ अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम्। अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥

एकोनेकः सुसूक्ष्मः सकलजनहृदामन्तरस्थः परोक्षः स्थूलोसौ पञ्चवक्त्रो वरशुकवहनः शक्तिहस्तस्त्रिनेत्रः । सप्तार्चिः सप्तजिह्वस्त्रिभुवनजननस्थानसंहारकारी दीप्तः प्रत्यक्षदेवः स भवतु हुतभुक्सर्वकामप्रदो नः ॥

वन्दे सूर्यं ग्रहेशं प्रतिदिनमुदितं व्योमगं दीप्तियुक्तं दीप्तांशुं दीप्तवर्णं सकलजननुतं पद्मकान्तं वरेण्यम् । रक्ताम्भोजौ दधानं शिवचरितधरं साक्षिणं कर्मभूमौ मित्रं भानुं हरिरथगतं ज्योतिषां ज्योतिरूपम् ॥

अग्निर्नव मधुश्छन्दा वैश्वामित्रः । वायो वायव्यैन्द्रवायव मैत्रावरुणास्तृचा । अश्विनाद्वादशाश्विनैन्द्रवैश्वदेवसारस्वताः । सप्तैताः प्रउगदेवताः ( सर्वप्रकृतिनो दश ) ॥

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ अग्निः पूर्वेभिर्ऋषिभिरीड्यो
नूतनैरुत ।[1] सदेवाँ एह[2] वक्षति ॥ अग्निना रयि-
मश्नवत्पोषमेव दिवेदिवे । यशसं वीरवत्तमम् ॥
अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवे-
षु गच्छति ॥ अग्निर्होता कविक्रतुः सत्याश्चित्रश्र[3]-
वस्तमः । देवो देवेभिरा गमत् ॥ व१ ॥ यदङ्ग
दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत्[4]सत्यमङ्गिरः ॥
उप त्वाग्ने दिवेदिवे दोषावस्तर्[5]धिया वयं । नमो
भरन्त एमसि ॥ राजन्तमध्वराणां[6] गोपामृतस्य दी-
दिविम् । वर्धमानं स्वे दमे ॥ स नः पितेव सून-
वेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ व२
॥ सू१ ॥

वायवा याहि दर्शतेमे सोमा अरंकृताः । ते-

१ इह २ मि ३ सत्यं चित्रश्रवस्तमम् ४ त ५ सू ६ मि

षां पाहि श्रुधी हवम् ॥ वाय उक्थेभिर्जरन्ते त्वा-
मच्छाजरितारः । सुतसोमा अहर्विदः ॥ वायो तव
प्रपृञ्चती धेना जिगाति दाशुषे । [1]उरूची सोम-
पीतये ॥ इन्द्रवायू इमे सुता उपप्रयोभिरा गतम् ।
इन्दवो वा[2]मुशन्ति हि ॥ वायविन्द्रश्च चेत[3]थः सु-
तानां वाजिनीवसू तावा यातमुप द्रवत् ॥ व३ ॥
वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् । म-
क्ष्विरत्था धिया नरा ॥ मित्रं हुवे पूतदक्षं वरुणं
च रिशादसम् । धियं घृताचीं साधन्ता ॥ ऋ-
तेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहन्त-
माशाथे ॥ कवी नो मित्रावरुणा तुविजाता उरु-
क्षया । दक्षं द[4]धाते अपसम् ॥ व४ ॥ सू२ ॥

अश्विना[5]यज्वरीरिषो द्रवत्पाणी शुभस्पती ।
पुरुभुजा चनस्यतम् ॥ अश्विना पुरुदंससा नरा

१ ऊ २ षः ३ तः ४ ददाते ( दधाति ) ५ जु

शवीरया धिया । धिष्ण्यावनतङ्गिरः ॥ दस्रा यु-
वाकवः[1] सुता नासत्या वृक्तबर्हिषः । आ यातं
रुद्रवर्तनी[2] ॥ इन्द्रा याहि चित्रभानो सुता इमे
त्वायवः । अण्वीभिस्तना पूतासः ॥ इन्द्रा याहि
धियेषितो[3] विप्रजूतः सुतावतः । उप ब्रह्माणि
वाघतः[4] ॥ इन्द्रा याहि तूतुजान[5] उप ब्रह्माणि[6] ह-
रिवः । सुते दधिष्व नश्चनः[7] ॥ व५ ॥ ओमास-
श्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो[8]
दाशुषः सुतम् ॥ विश्वे देवासो अप्तुरः[9] सुतमा
गन्त[10] तूर्णयः[11] । उस्रा इव स्वसराणि[12] ॥ विश्वे दे-
वासो अस्रिध एहिमायासो अद्रुहः । मेधं[❀] जुष-
न्त वह्नयः । पावका नः सरस्वती वाजेभिर्[×]वाजि-
नीवती[÷] । यज्ञं वष्टु[*] धियावसुः[+] ॥ चोदयित्री सू-

१ वा २ र्ति ३ धियोशितो ४ वाग्घतः ५ जन (जान्व) ६ ह्म ७ नाश्विनः [नश्चवः]
८ दश्वाँसो ९ अप्तरः (अस्तुरः) १० न्तु ११ तूर्तयः (तूर्णवः) १२ सुसराणि [सुस्वराणि]
❀ मेदं [मेधां] × वाजिभिः ÷ वति * वाष्टु + वसु

नृतानां चेतन्ती [1]सुमतीनां। यज्ञन्दधे सरस्वती ॥
महो [2]अर्णः सरस्वती प्र चेतयति केतुना। धि-
यो विश्वा वि राजति ॥ व६ ॥ सू३ ॥ अ१ ॥

॥ इत्यृग्वेदे अ० सू० ॥ ॥ अथ यजुराग्निसू० ॥

इष्टां शक्तिं स्वस्तिकाभीतिमुश्चैर्दीर्घैर्दोर्भिर्धार-
यन्तं जपाभम् । हेमाकल्पं [3]पद्मसंस्थं त्रिनेत्रं ध्या-
येद्वह्निं बद्धमौलिं जटाभिः ॥

नवकुङ्कुमसन्निभं त्रिनेत्रं रुचिराकल्पशतं
भजामि वह्निम् । स्रुवशक्तिवराभयानि दोर्भिर्द-
दतं रक्तसरोरुहे निषण्णाम् ॥

ईळे अग्निमित्यङ्गिरसं [4]धाया आग्नेयं गायत्रम् ॥
ईळे अग्निं विपश्चितं गिरा यज्ञस्य साध-
नम् । श्रुष्टीवानं धितावानम् ॥ अग्ने शकेम ते

---

१ सोम २ अरुणः ३ चारुयंत्रं ४ त्याङ्गिरसाधायाः (त्याङ्गिरसं धायः) (त्यङ्गिरसादायं)

वयं य्यमं देवस्य वाजिनः । अति द्वेषाँसि तरेम ॥ पृथुपाजा अमर्त्यो घृतनिर्णिक्स्वाहुतः । अग्निर्यज्ञस्य हव्यवाट् ॥ तँ सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतये ॥ नवं नु स्तोममग्नये दिवः[1] श्येनाय जीजनम्[2] । वस्वः[3] कुविद्वनाति[4] नः ॥ स्पार्हा यस्य श्रियो दृशे रयिर्वीरवतो यथा । अग्ने यज्ञस्य चेततः[5] ॥ उप त्वा रण्वसन्दृशं प्रयस्वन्तः सहस्कृत । अग्ने ससृज्महे[6] गिरः ॥ उप छायामिव घृणेरगन्म[7] शर्म ते वयम् । अग्ने हिरण्यसन्दृशः ॥ अग्ने मृळ महाँ असि य ईमा[8] देवयुञ्जनम् । इयेथ[9] बर्हिरासदम् ॥ स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः । दूतो विश्वेषां भुवत्[×] ॥ औवर्भृगुवच्छुचिमप्नवानवदा हु-

१ दिवि ( देवः ) २ नत ( नः ) ३ वस्स्वः ४ दु ५ चेतनः ( शोचतः ) ६ ससृज्महे ( संसृज्महे ) ७ राग ८ इमा ९ इथ × भुवम्

वे । अग्निंसमुद्रवाससम् ॥ हुवे वातस्वनं कविं पर्जन्यक्रन्द्यं सहः । अग्निं समुद्रवाससम् ॥ आ सवँ सवितुर्यथा भगस्येव[1] भुजिं हुवे । अग्निं समुद्रवाससम् ॥ उप त्वा जामयो गिरो [2]देदिशतीर्हविष्कृतः । वायोरनीके अस्थिरन् ॥ यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम् । आपश्चिन्नि दधा पदम् ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाँ रेताँसि जिन्वति ॥ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः ॥ ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः । स्तोता स्यां तव [3]शर्मणि ॥ त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः । त्वां वर्धन्तु नो गिरः ॥ [4]अदब्धस्य स्वधावतो दूतस्य रेभतः [5]सदा । [6]अग्नेः सख्यं वृणीमहे ॥ अग्निः शुचि-

१ भगस्येवा २ दी।दिशतिह ( तीह ) ३ शर्मणें ४ अदग्धस्य सुधा ५ सखा ६ अग्ने

व्रततमः शुचिर्विप्रः शुचिः कविः[1] । शुची रोचत आहुतः ॥

॥ इति यजुरग्निसू० ॥ अथ ऋग्वेदे सूर्यसू० ॥

प्रत्यक्षदेवं विषदं सहस्रमरीचिभिः शोभितभूमिदेशम् । सप्ताश्वगं सद्ध्वजहस्तमाद्यं देवं भजेऽहं मिहिरं हृदब्जे ॥

उदु त्यं सप्तोना सौर्यं नवाद्या गायत्र्यो(ऽन्त्यश्चतुस्रोऽनुष्टुभो)ऽन्त्यस्तृचो रोगघ्नोऽन्त्योऽर्धर्चोद्विषद्द्वेष[2] उपनिषत् ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥ अदृश्रन्नस्य[3] केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथा ॥ तरणिर्विश्वदर्शतो ज्योति-

१ छविः २ म्रः ३ म

ष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥ प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे[1] ॥ व१ ॥ येना पावक चक्षसा[2] भूरण्यन्तं[3] जनाँ अनु । त्वं वरुण पश्यसि ॥ वि द्यामेषि रजस्पृथ्वहा[4] मिमानो अक्तुभिः । पश्यञ्जन्मानि सूर्य ॥ सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभिः ॥ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ शुकेषु मे हरिमाणं रोपणाकासु[5] दध्मसि । अथो हारिद्रवेषु[6] मे हरिमाणं नि दध्मसि ॥ उदगादयमादित्यो वि-

१ स्वान्द (स्वन्द) २ क्षु ३ भु ४ थु ५ ना ६ ह

श्वेन सहसा सह । द्विषन्तं[१] मह्यं रन्धयन्मो अ-
हं द्विषते रधम् ॥ समैच्तिषोर्ध्वमहसा[२] आदित्ये-
न[२] महीयसा । अहं य्यशास्विनाँ यशो विश्वारू-
पाण्या दधे[३] ॥ उद्यन्नद्यविनोभज पिता पुत्रेभ्यो
यथा । दीर्घायुत्वस्य हेषिषे[४] तस्य नो धेहि[५] सूर्य ॥
उद्यन्तन्त्वामित्रमह[६] आरोहन्तं विचत्तण पश्येम
शरदश्शतं जीवेम शरदः शतम् ॥ इत्यृग्वेदे रविसूक्तानि ॥

दिवाकरं दीप्तसहस्त्ररश्मिं तेजोमयं जगतः सा-
त्तिणं च । प्रांशुं भानुं सूर्यमाद्यं ग्रहाणां विवस्व-
न्तं शरणं तं प्रपद्ये ॥

॥ अथयजुस्सूर्यसू० ॥ ॥ उदु त्यमिति ब्रह्मणः ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे-
विश्वाय सूर्यम् ॥ चित्रं देवानामुदगादनीकं चत्तु-
र्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्त-

---

१ तो २ स [illegible]

रिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च ॥ द्यां गच्छ स्वर्गच्छ रूपं वो रूपेणाभ्यागां वयसा वयः तुथो[1] वो विश्ववेदा विभजतु वर्षिष्ठेऽधिनाके एतत्ते[2] अग्ने राध एति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा ब्राह्मणमद्यध्र्यासम्पितृमन्तं पैतृमत्यमृषिमार्षेयँ सुधातुदक्षिणम् ॥ अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्जयतु जर्हृषाणोऽयंवाजञ्जयतु वाजसातौ ॥ वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु । हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥ वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैरस्मद्दाता मधुमती देवत्रा गच्छ प्रदातारमाविशानवहायास्मान्देवि दक्षिणे देवयानेन पथायती सुकृताल्लोके सीदतन्नौ[3] संस्कृतम् ॥ कदाचन स्त-

[1] थुथ (थूथो) [2] द [3] तन्नो

रीरसि नेन्द्र सश्चासि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते उपयामगृहीतोऽस्यादित्येभ्यस्त्वा । कदाचन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनं त इन्द्रियमातस्थावमृतं दिवि उपयामगृहीतोऽस्यादित्येभ्यस्त्वा । यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादँहोश्चिद्या वरिवोवित्तरासत् उपयामगृहीतोऽस्यादित्येभ्यस्त्वा । विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मन्दस्व या दिव्या वृष्टिस्तया त्वा श्रीणामि । अदब्धेभिः सवितः पायुभिष्ट्वँ शिवेभिरद्य परिपाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशँस ईशत । उपयामगृहीतोऽसि देवाय त्वा सवित्रे उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठा-

नो वृहदुक्ते नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ॥ ॐ नम आदित्याय शिवचर्याधराय नमः। सहस्राकिरणाय नमः। ग्रहाधिपतये नमः। कमलबान्धवाय नमः। यजमानवरप्रदाय नमः।

॥ तर्पणम् ॥ उदयंस्तु महाभानुस्तेजसा चाभयङ्करः। सहस्ररश्मिदीप्तश्च ह्यादित्यः प्रीयतां मम ॥ अनेन मन्त्रपाठेन (होमेन) आत्मनोवाङ्मनः कायोपार्जितपापनिवारणार्थमग्न्यादित्यौ ग्रहाधिपती सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥

॥ इत्यग्न्यादित्योर्ऋग्यजुःसूक्तानि ॥

प्रार्थना ॥ सहस्रकिरणः श्रीमान्सप्ताश्वो लोकबान्धवः। भक्तानां वरदो भानुः प्रीतो भवतु सर्वदा ॥

॥ ओ३म् ॥

॥ वरुणचन्द्रमोभ्यां नमः ॥

---

एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम्। स नः शर्म त्रिवरूथं वि यं सत्पातं नो द्यावापृथिवी उपस्थे ॥ या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेळन्राजन्सोम प्रति हव्या गृभाय ॥

श्यामं सौम्यरुचिं महामुनिनुतं यादोगणैः संस्तुतं पाशं दण्डवरं दधानममलं दोर्भ्यां गजस्थं विभुम्। आशापाशशतघ्नमञ्चितदृशं मानोन्नतं यादसां राजानं प्रमदान्वितमभयदं देवं भजेऽहं सदा॥
शङ्खप्रभमेणप्रियं शशाङ्कमीशानमौलिस्थितमी-

ड्यरूपम् । तमीपतिमम्बुजयुग्महस्तं ध्याये हृदब्जे शशिनं ग्रहेशम् ॥

स्वादो पञ्चोनाः प्रगाथः[1] सौम्यं[2] त्रैष्टुभं पञ्चमी जगती ॥ ॥ स्वादोरभक्ति वयसः सुमेधा[3] स्वाध्यो वरिवोवित्तरस्य विश्वे यं देवा उत मर्त्यासो मधु ब्रुवन्तो अभि सञ्चरन्ति ॥ अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य । इन्दविन्द्रस्य सख्यं जुषाणः[4] श्रौष्टीव धुरमनु[5] राय ऋध्याः[6] ॥ अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् । किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥ शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः । सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥ इमे मा पीता यशस उरुष्यवो रथं न गावः समनाह पर्वसु । ते

१ काण्वः प्रगाथः २ सोमस्त्रिष्टुप् ३ धाः ४ षाणाः ५ धूरं ६ ऋद्धया

मा रक्षन्तु विस्रसश्चरित्राद्युत मा स्रामाद्यवयन्त्वि-
न्दवः ॥ व११ ॥ अग्निं न मा मथितं सं दिदीपः
प्र चक्षय कृणुहि वस्यसो नः । अथा हि ते मद
आ सोम मन्ये रेवाँ इव प्र चरा पुष्टिमच्छ ॥
इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव
रायः । सोम राजन्प्र ण आयूंषि तारीरहानीव
सूर्यो वासराणि ॥ सोम राजन्मृळया नः स्वस्ति
तव स्मसि व्रत्या३स्तस्य विद्धि । अलर्ति दक्ष उत
मन्युरिन्दो मा नो अर्यो अनुकामं परा दाः ॥
त्वं हि नस्तन्वः सोम गोपा गात्रेगात्रे निषसत्था
नृचक्षाः । यत्ते वयं प्रमिनाम व्रतानि स नो मृळ
सुषखा देव वस्यः ॥ ऋदूदरेण सख्या सचेय यो
मा न रिष्येद्धर्यश्वपीतः । अयं यः सोमो न्यधाय्यस्मे
तस्मा इन्द्रं प्रतिरमेम्यायुः ॥ व१२ ॥

१ द्या २ ग्निर्न ३ प ४ ह ५ विष ( नृपुसात्था ) ६ ळा ७ ष्योदर्य ८ ह्य ९ य्ययुः

अप त्या अस्थुरनिरा अमीवा निरत्रसन्तमि-
षीचीरभैषुः । आ सोमो असाँ [1]अरुहद्विहाया
अगन्म यत्र प्रतिरन्त आयुः ॥ यो न इन्दुः पि-
तरो हृत्सु पीतोऽमर्त्यो मर्त्याँ आविवेश । तस्मै सो-
माय हविषा विधेम मृळीके अस्य [2]सुमतौ स्याम ॥
त्वं सोम पितृभिः संविदानो[3]ऽनु द्यावापृथिवी आ
ततन्थ । तस्मै त इन्दो हविषा विधेम वयं स्या-
म पतयो रयीणाम् ॥ त्रातारो देवा अधि वोचता[4]
नो मा नो निद्रा ईशत मोत जल्पिः । वयं सोमस्य
वि[5]श्वह प्रियासः सुवीरासो विदथमा [6]वदेम ॥ त्वं
नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृच-
क्षाः । त्वं न इन्द ऊतिभिः सजोषाः पाहि पश्चा-
तादुत वा पुरस्तात् ॥ व १३ ॥

यः कालहेतोः क्षयवृद्धिभागी यं वै देवाः पितर-

---

१ आरोह २ स्व ३ नो ४ तनो ( तन्नो ) ५ श्वा ६ वि

श्चामनन्ति । तं वै वरेण्यं वरदं ब्रह्मरूपं सोमं सदा शरणमहं प्रपद्ये ॥

अथ यजुः ॥ प्रवे[1]धसे इति वेदसो वन्दारो[2]वैष्णवस्य शेषस्तिस्रः पाप्मापहस्य ॥

प्रवे[1]धसे कवये वेद्याय वचो वन्दारु वृषभाय वृष्णे । यतोभयमभयन्तन्नो अस्त्वव देवानां यजेहेड्यानि ॥ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥ उदग्ने तव तद्घृतादर्चीरोचत आ हुतम् । निंसानं जुह्वो मुखे ॥ उप त्वा जुह्वो३मम घृताचीर्यन्तु हर्यत । अग्ने हव्या जुषस्व नः ॥ प्रजा अग्ने संवासया[3]शाश्च पशुभिस्सह राष्ट्राए[4]यस्मा आ धेहि यान्यां[5]सन्त्सवितुः सवे ॥ संवः सृजामि हृदयं संसृष्टं मनो अस्तु वः । संसृष्टास्तन्वः सन्तु वः संसृष्टः

१ द २ रुवै ३ यामाशाश्च ४ गया ५ न्य

प्राणो अस्तु वः ॥ सं या वः प्रियास्तन्[१]वः सं प्रिया
हृदयानि वः । आत्मा वो अस्तु सं प्रियः सं प्रि-
या[२]स्तन्वो मम ॥ यो अश्वत्थः शमीगर्भ आरुरो-
ह त्वय्यपि । तन्ते गृह्णामि यज्ञियैः केतुभिः सह ॥
मयि गृह्णाम्यहमग्रे अग्निं रायस्पोषेण सह वर्चसे-
ह देवाः । मयि प्रजां मयि पुष्टिं दधामि मदे-
मशतहिमाः सुवीराः ॥ यो नो अग्निः पितरो हृ-
त्स्वन्तरा[३]ँमर्त्यो मर्त्याँ आविवेश । तमात्मनि परि-
गृह्णीमहे वयं मैषो अस्मानवहाय परागान्मा व-
यमेतमवहाय परागाम ॥ मही विश्पत्नी सदनी
ऋतस्यार्वाची एतं धरुणी रयीणाम् । अन्तर्वती ज-
न्यं जातवेदसमध्वराणां जनयँ[४]तं पुरो गाम् ॥ उत्स-
मु[५]द्रा मधुमाँ ऊर्मिरागात्साम्राज्याय प्रतरन्दधानाः ।
अमी च ये मघवानो वयं चेषमूर्जं मधुमत्सम्भरे-

१ नुवः २ स्तन्वो ३ रो ४ त्यां ५ द्रान्

म ॥ इयत्यग्र आसीरदो देवि प्रथमाना पृथग्यत् । देवैर्नुत्वा[1] व्यसर्पो महित्वा अदृंहथाः शर्कराभिस्त्रिविष्टपि । अजयो[2] लोकान्प्रदिशश्चतस्रः ॥ उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतः सधस्स्थात् । आशुन्त्वाजौ दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥ यदीदन्दिवो यदि वा पृथिव्यास्सम्बभूव सुकृतो रराणयोः । तयोः पृष्टे सीदतु जातवेदाः प्रजाम्[3]स्मभ्यं जनयन्नयिं च ॥ चन्द्रमग्निं चन्द्ररथँ हरिवृतं वैश्वानरमप्सुषदँ स्वर्विदम् । विगाहं तूर्णिं तविषीभिरावृतं भूर्णिन्देवा[4] स इह स्वश्रियन्दधुः ॥ यत्पृथिव्या अनामृतँ सम्बभूवत्वेसचा । तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥ यदन्तरिक्षस्य यद्दिवो अनामृतँ सम्बभूवत्वेसचा । तदग्निरग्नये ददत्तस्मिन्नाधीयता-

१ त्ता २ पो ३ जा अ ४ तू

मयम् ॥ ॥ ओं नमः सोमाय उमाचर्याधराय नमः । षोडशकलाधिपतये नमः । नक्षत्राधिपतये नमः । कुमुदबान्धवाय नमः । सर्वाप्यायनकर्त्रे नमः । यजमानवरप्रदाय नमः ॥

तर्पणम् ॥ द्विजराजो महापुण्यस्तारापतिर्विशेषतः ।
ओषधीनां च यो राजा स सोमः प्रीयतां मम ॥

अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं वरुणचन्द्रमसौ नक्षत्राधिपती सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥

॥ इति वरुणचन्द्रमसोऋग्यजुःसूक्तानि ॥

प्रार्थना ॥ वृद्धिर्यस्य सिते पक्षे सुराणाममृतं तु यः ।
सम्पूर्णमण्डलो बालः स सोमः प्रीयतां मम ॥

॥ ओ३म् ॥

॥ कुमारभौमाभ्यां नमः ॥

तँ युवन्देवावश्विना कुमारं साहदेव्यम् । दीर्घायुषं कृणोतन ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाँ रेताँसि जिन्वति ॥

षड्वक्त्रं दीर्घबाहुं सुरवरनमितं पार्वतीनन्दनं तं दोर्भ्यां शक्तिं वहन्तं ध्वजमपि च सदा दिव्यरूपं कुमारम् । नृत्यत्मत्तमयूरवाहनगतं दैत्यान्तकं सिद्धिदं नानारत्नविभूषितं हरसुतं होमे भजेहं सदा ॥

प्रतप्तगाङ्गेयनिभं ग्रहेशं सिंहासनस्थं कमलासिहस्तम् । सुरासुरैः पूजितपादपद्मं भौमं दया-

लुं हृदये स्मरामि ॥

अग्निर्होता दश गायत्रं वामदेवऋषिः बोधद्यदाभ्यां सोमकं साहदेव्यमभ्यवदत्पराभ्यामस्याश्विनौ आयुरयाचत ॥

अग्निर्होता नो अध्वरे[1] वाजी सन्परि णीयते। देवो देवेषु यज्ञियः ॥ परि त्रिविष्ट्यध्वरं[1] यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ अयं यः सृञ्जये पुरो[1] दैववाते[3] समिध्यते । द्युमाँ अमित्रदंभनः ॥ अस्य घा[4] वीर ईवतोऽग्नेरीशीत मर्त्यः । तिग्मजम्भस्य मीळुषः ॥ तमर्वन्तं न सानसिमरुषं[1] न दिवः शिशुम् । मर्मृज्यन्ते दिवेदिवे ॥ बोधद्यन्मा हरिभ्यां[1] कुमारः साहदेव्यः । अच्छा न हूत उदरं ॥ उत त्या यज-

१ वा २ जस्प ३ दैव्य (दैववते) ४ गा ५ इव

ता हरी कुमारात्साहदेव्यात् । प्रयता सद्य आ
ददे[1] ॥ एष वां देवावश्विना कुमारः[2] साहदेव्यः[3] ।
दीर्घायुरस्तु सोमकः ॥ तं युवं देवावश्विना कुमारं
साहदेव्यम् । दीर्घायुषं कृणोतन ॥ व १६ ॥ इति ऋग्वेदे

तेजोमण्डलमध्यगं सुनयनं रक्ताम्बरैर्भूषितं
सिंहस्योपरिवर्तमानममलं बालाकृतिं सिद्धिदम् ।
नानारत्नकिरीटहारकटकैरुद्भासितं मङ्गलं
दोर्भ्यां पाशवरं सृणिं च ददतं होमे भजेऽहं सदा ॥

अथ यजुः ॥ जुष्टो दमूना इत्यनूच्यमानो ब्रह्मणः ॥

जुष्टो दमूना अतिथिर्दुरोणे[4] इमं नो यज्ञमुप
याहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या
शत्रूयतामा भरा भोजनानि ॥ अग्ने शर्ध महते

१ दधे २ रः ३ व्याः [?] ४ णो [?]

सौभगाय तव द्युम्नान्युत्तमानि सन्तु । सँ जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महाँसि ॥ सँसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे[2] सनो वसून्या भर ॥ सखायः सं वः सम्यञ्चमिषँ स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे[3] सहस्वते[4] ॥ अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः । अग्निरत्यँ[5] रघुष्यदं जेतारमपराजितम् ॥ प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उप यन्ति वाजाः ॥ इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवताति मच्छ । प्रति न ईं सुरभीणि व्यन्तु ॥ उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं नः शोचा मरु-

१ स्पते २ द्ध्य ३ नप्से ४ र ५ रत्यं

द्धृधोऽग्ने सहस्रसातमः ॥ नू नो रास्व सहस्रव-
त्तोकवत्पुष्टिमद्वसु । द्युमदग्ने[1] सुवीर्यं वर्षिष्ठमनुप-
क्षितम् ॥ त्वां चित्रः[2] श्रवस्तमं त्वामग्ने हवि-
ष्मन्तो विभ्राजसा[3] । भवानो अग्ने वितोत गो-
पा ॥ भवावयस्कृदुत नो वयोधाः रास्वा च नः
सुमहो[4] हव्यदातिं । त्रास्वोतनः[5] तन्वो[6] अप्रयुच्छन् ॥
हव्यवाहमभिमातिषाहँ रक्षोहनं पृतनासु जिष्णु-
म् । ज्योतिष्मन्तं दीद्यतं पुरन्धिमग्निं स्विष्टकृत-
माहुवेम ॥

महेश्वरस्याननात्स्वेदबिन्दुं भूमौ जातं रक्तमा-
ल्याम्बरात्तम् । सुदर्शनं लोहिताङ्गं कुमारं भौमं
सदा शरणमहं प्रपद्ये ॥

स्विष्टमग्ने अभितद्गृणीहि विश्वाश्च देव पृत-
ना अभिष्याः । सुँगन्नु पन्थां प्रदिशन्विभाहि

१ द्युमाँद ( द्यामाँद ) २ चित्रश्रवः ३ पा ४ सो ५ चनः ६ व्वो ७ स्व ( सुगन्न )

ज्योतिष्मद्देह्यजरन्न आयुः ॥ सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे[1] यजध्यै[2] । देवाँ अच्छा दीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥ श्रीणामुदारो धरुणो रयीणां[3] मनीषाणां प्रार्पणः सोमगोपाः । वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः ॥ यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः । कृधी ष्व१स्माँ[4] अदितेरनागान्व्येनाँसि शिश्रथो विष्वगग्ने ॥ महश्चिदग्न एनसो अभीक ऊर्वाद्देवानामुत[5] मर्त्यानाम् । मा ते सखायः सदमिद्रिषाम यच्छा तोकाय तनयाय शं योः ॥ यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे । विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमन्तम् ॥ अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध ।

१ विदधे २ ध्द्यै ३ मनीषाणां ४ अदितोररागान्व्योनाँसि श्रिश्रथो विश्वगग्ने ५ ऊर्वाङ्दे

अस्मात्समुद्राद्बृहतो दिवो नोऽपां भूमानमुप नः सृजेह ॥ यथा ह त्यद्वसवो गौर्यं चित्पदि षितामसुञ्चता यजत्राः । एवो ष्व१स्मन्मुञ्चता व्यँहः प्र तार्यग्ने प्रतरं न आयुः ॥ त्रीण्यायूँषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने । ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं य्योः ॥ पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥ आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् । अग्निर्विद्वान्त्स यजात्सेदु होता सो अध्वरान्त्स ऋतून्कल्पयाति ॥ वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ साध्वीमकर्देववीतिर्नो अ-

---

१ देवो ( दिव्यो ) २ ष ३ क्नु ४ विलक्षे ( विनक्षे ) ५ स्वाध्वी ( स्वाद्वी ) ६ वीतिं नो।

घ यज्ञस्य जिह्वामविदाम गुह्याम्[1] । स आयुरागात्सुरभिर्वसानो मेहीमकर्द्युम्नहूतिर्नो[2] अद्य ॥ अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुः सुरभा उलोके । युवा कविः पुरुनिःष्ठो[3] ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥ अग्निं[4] दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह ॥ अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः । स वेद यज्ञमानुषक् ॥ ॥ ओं नमोऽङ्गारकाय कुमारव्रतधारिणे नमः । महाकिरणाय नमः । धरासुताय नमः । यजमानवरप्रदाय नमः ॥

तर्पणम् ॥ येनार्जिता जगत्कीर्तिर्भूमिपुत्रेण शाश्वती । शत्रवश्च हता येन भौमेन महितात्मना । स प्रीयतां तु भौमोद्य तुष्टो भूयात्सदा मम ॥ अनेनमन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः कायोपार्जितपाप-

१ ह्या २ भद्रामकर्देवहूतिं नो ३ निष्ठ ४ अग्निर्दूतं

निवारणार्थं कुमारभौमौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥

॥ इति कुमारभौमयोर्ऋग्यजुः सूक्तानि ॥

प्रार्थना ॥ भूमिपुत्रो महातेजा वह्निरूपी महाबलः ।
ग्रहाणामधिपः श्रेष्ठः स भौमः प्रीयतां मम ॥

॥ ओ३म् ॥

॥ विष्णुबुधाभ्यां नमः ॥

वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् । इमा ब्रह्म सधमादे जुषस्व ॥

विष्णुं सर्वजनाश्रयं सुमुकुटं हारादिभूषान्वितं
शान्तं श्यामवराननं सुरुचिरं दोर्भिश्चतुर्भिर्युतम् ।
शङ्खं चक्रमथारबिन्दयुगलं कौमोदकीं बिभ्रतं
देवं तं गरुडाश्रयं सुनयनं दिव्याङ्गभूषं भजे ॥

सोमात्मजं हंसगतं द्विबाहुं शङ्खेन्दुरूपमसिपा-
शहस्तम् । दयानिधिं भूषणभूषिताङ्गं बुधं स्मरे
मानसपङ्कजेऽहम् ॥

विष्णोः षड्वैष्णवं हि प्रवो जागतं त्वैन्द्रश्चा-
द्यस्तृचो भव पञ्चाबोधि षडाश्विनं त्वन्ते त्रिष्टुभौ ॥

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि
विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं[1] वि-
चक्रमाणस्त्रेधोरुगायः ॥ प्र तद्विष्णुः स्तवते वी-
र्येण मृगो न भीमः कुचरो गिरिष्ठाः[2] । यस्योरुषु
त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥

१ धःस्थं २ ष्ठः

प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय
वृष्णे । य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रि-
भिरित्पदेभिः ॥ यस्य त्री पूर्णा मधुना पदान्यक्षी-
यमाणा स्वधया मदन्ति । य उ त्रिधातु पृथिवीमु-
त द्यामेको दाधार भुवनानि विश्वा ॥ तदस्य प्रि-
यमभि पाथो अस्यां[1] नरो यत्र देवयवो[2] मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे म-
ध्व उत्सः ॥ ता वां वास्तून्युश्मसि[3] गमध्यै यत्र गा-
वो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृ-
ष्णः परमं पदमव भाति भूरि ॥ व२४ ॥ प्र वः पाँ-
न्तमन्धसो धियायते महे शूराय विष्णवे चार्चत ।
या सानूनि[5] पर्वतानामदाभ्या महस्तस्थतुरर्वतेव सा-
धुना[6] ॥ त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू
सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमि-

१ श्यां २ या ३ न्यस्म ४ पान्थ (पातु) (पन्था) ५ नु ६ ध्व

त्कृशानोरस्तुरसनामुरुष्यथः ॥ ता ई वर्धन्ति मह्य-
स्य पौंस्यं नि मातरा नयति रेतसे[2] भुजे । दधाति
पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने[3] दिवः ॥
तत्तदिदस्य पौंस्यं गृणीमसीनस्य[4] त्रातुरवृकस्य मी-
ढुषः । यः पार्थिवानित्रिभिरिद्विगामभिरुरुक्रमिष्टो-
रुगायाय[5] जीवसे ॥ द्वे इदस्य क्रमणे स्वर्दशोऽभि-
ख्याय मर्त्यो भुरण्यति[6] । तृतीयमस्य नकिरा दध-
र्षति[7] वयश्चनं पतयन्तः पतत्रिणः ॥ चतुर्भिः साकं
नवतिं च नामभिश्चक्रं न वृत्तं वृतीरवीविपत्[9] । वृह-
च्छरीरो विमिमान ऋक्कभिर्युवाकुमारः प्रत्येत्याह[10]-
वम् ॥ व२५ ॥ भवा मित्रो न शेव्यो घृतासुतिर्वि[11]-
भूतद्युम्न एवया[12] उ सप्रथाः[13] । अधा ते विष्णो वि-
दुषा चिदर्ध्यः[14] स्तोमो यज्ञश्च राध्यो हविष्मता[15] ॥ यः
पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाश[16]-

१ णा २ स्य (सि) ३ रु ४ सि ५ रुगायाय ६ भू ७ र्श ० नः ८ नवभिश्चक्रुर्न ९ वृतीनवी
१० प्रती ११ स्वभि १२ ह्र [illegible] दिध्यः १५ न्तः १६ स

ति । यो जातमस्य महतो महि ब्रवत्सेदु श्रवो-
भिर्युज्यं चिदभ्यसत् ॥ तमु स्तोतारः पूर्व्यं यथा
विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो
नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥
तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुत-
स्य वेधसः । दाधार दक्षमुत्तममहर्विदं व्रजं च वि-
ष्णुः सखिवाँ अपोर्णुते ॥ आ यो विवाय सचथाय
दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः । वेधा अ-
जिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभज-
त् ॥ व२६ ॥

अबोध्यग्निर्ज्म उदेति सूर्यो व्युषाश्चन्द्रा म-
ह्यावो अर्चिषा । आयुक्षातामश्विना यातवे रथं प्रा-
सावीद्देवः सविता जगत्पृथक् ॥ यद्युञ्जाथे वृषण-
मश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् । अ-

१ तम २ चेद्वि ३ माम ४ खा ५ स ६ ज्म ७ व्यु ८ षः ९ अय १० अथे

स्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि[1] ॥ अर्वाङ्त्रिचक्रो मधुवाहनोरथो जीराश्वो अश्विनोर्यातु सुष्टुतः । त्रिबन्धुरो मघवा विश्वसौभगः शं न आ वक्तद्[2]द्विपदे चतुष्पदे ॥ आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया[3] मिमिक्षतम् । प्रायुस्तारिष्टं नी[4] रपाँसि मृक्षतं सेधतं द्वेषो[5] भवतं सचाभुवा[6] ॥ युवं ह गर्भं[7] जगतीषु धत्थो युवं विश्वेषु भुवनेष्वन्तः । युवमग्निं च वृषणावपश्च वनस्पतींर्[8]अश्विनावैरयेथाम् ॥ युवं ह स्थो[9] भिषजा भेषजेभिरथो ह स्थो[10] रथ्यौ[11]३ रथ्येभिः । अथो ह क्षत्रमधि धत्थ उग्रौ[12] यो वां हविष्मान्मनसा ददाश ॥ व२७ ॥ इति ऋग्वेदे ॥

अथ यजुः ॥ रथन्तरँ रथेन वैष्णवं सर्वे वाजपेय मन्त्राः । देवानामार्षम् ॥

१ हे २ वड्क्द् ३ ष ४ नि ५ द्विषो ६ भव ७ गर्भो ८ न ९ स्तो १० स्तो ११ ध्या १२ ग्रो

रथन्तरँ साम भवत्याशीय उज्जित्या इयं वै रथन्तरमस्यामेवाध्यभिषिच्यते वियोनिर्वै वाजपेयोनिरुक्तः सम्प्राजापत्योनिरुक्तसामा[2] तेन वियोनिर्यदनिरुक्ताः प्रातः सवास्तेन स योनिरनिरुक्ताः प्रातस्सवा अनिरुक्तः प्रजापतिः प्रजापतिमेवाप्नोति। वाजवतीभिर्मध्यन्दिने स्तुवन्त्यन्नं वै वाजोन्नाद्यस्यावरुद्ध्यै चित्[3]त्रवतीभिरार्भवे[4] पवमाने स्वर्गस्य लोकस्य समष्ट्या। आष्ट्रादंष्ट्रमुत्तममुक्तानां[5] भवत्युत्तरे एव स्तोत्रे अभि सन्तनोति बृहत्साम भवति यद्वा अति रिच्यतेऽमुन्तंल्लोकमभ्यतिरिच्यते बृहत्त्वा अमुँल्लोकमाप्तुमर्हतीन्द्रियं वीर्यं बृहदिन्द्रियं[6] एव[7] वीर्ये प्रतितिष्ठति वैष्णवीषु शिपिविष्टवतीषु स्तुवन्त्येषा वै प्रजापतेः पशुष्ठास्तनूर्या शिपिविष्टवती। तस्माच्छिपिविष्टवतीषु स्तुवन्त्यतिरिक्तं वा एतदतिरिक्तं शि-

१ मध्याभि (मध्यभि) २ समा ३ त्त ४ ये ५ कथा ६ यं ७ एवं

पिविष्टमतिरिक्तेनैवातिरिक्तमाप्नोति ॥ अ१०४८ ॥

ॐ नमो बुधाय विष्णुव्रतधारिणे नमः । तीक्ष्ण-किरणाय नमः । रूपाधिपतये नमः । महाबुद्धिशरी-राय नमः । सोमवंशजाय नमः । यजमानवरप्रदा-य नमः ॥

तर्पणम् ॥ बुधो बुद्धिप्रदाता च सोमपुत्रो महाद्युतिः ।
आदित्यस्य रथे तिष्ठन्स बुधः प्रीयतां मम ॥

अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः का-योपार्जितपापनिवारणार्थं विष्णुबुधौ सानुचरौ प्री-येतां प्रीतौ मे भवेताम् ॥

प्रार्थना ॥ सिंहासनस्थो वरदः कर्णिकारसमद्युतिः ।
खड्गचर्मधरः प्राज्ञः स बुधः प्रीयतां मम ॥

॥ इति विष्णुबुधयोर्ऋग्यजुः सूक्तानि ॥

॥ ओ३म् ॥

॥ इन्द्राबृहस्पतिभ्यां नमः ॥

---

त्रातारमिन्द्रमवितारमिन्द्रँ हवे हवे सुहवँ शूर-
मिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रँ स्वस्ति नो
मघवा धात्विन्द्रः ॥ बृहस्पते अति यदर्यो अर्हा[1]-
द्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्त[2]प्र-
जात तदस्मासु द्रविणं धे[3]हि चित्रम् ॥

उद्यत्सूर्यायुतरुचिनिभं मौलिरत्नांशुदीप्तं देवं
पद्माशनिकरमजं नेत्रसाहस्ररम्यम् । हारानर्घ्यस्फु-
रदुरुमणिव्याप्तवक्षस्स्थलं तं ध्याये देवैः प्रणमि-
तपदं पूर्वदिक्पालमिन्द्रम् ॥

तेजोमयं शक्तित्रिशूलहस्तं सुरेन्द्रज्येष्ठस्तुतपाद-
पद्मम् । मेधानिधिं मत्[4]स्यगतं द्विबाहुं गुरुं स्मरे मा-

---

१ र्हं २ वस ऋत ३ देहि ४ हस्ति

नसपङ्कजेऽहम् ॥

बृहस्पते बृहस्पतिर्ज्ञानं तुष्टाव नवमी जगती । (शेषं त्रिष्टुभम्)

बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः । यदेषां श्रेष्ठं यदरिप्रमासीत्प्रेणा तदेषां निहितं गुहाविः ॥ सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम् । तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥ उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्[३] । उतो त्वस्मै तन्वं[१]वि सस्रे जायेव पत्ये उशती सुवासाः ॥ उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु । अधेन्वा च-

१ त्मी २ न् ३ त्वसे ४ त्य

रति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥व२३
यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोति[1] लोकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः[2] । आदघ्नास उपकक्षास उ त्वे हृदा इव स्नात्वा उ त्वे ददृश्रे[3] ॥ हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः। अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥ इमे ये नार्वाङ्न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः[4] । त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥ सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः । किल्विषस्पृत्पितुषणिर्ह्येषामरं[5] हितो भवति वाजिनाय ॥ ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करी-

१ त्यलकं २ व ३ शे ४ क ५ स

षु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥ व२४ ॥

अथ यजुः ॥ इन्द्राय वाचं वदतेन्द्रस्य जगतः।[1] दैवीवाचं प्रत्याज्यैशीर्षमानस्यासुरेभ्यः।[2] आयुर्यज्ञेन कल्पतामित्यनुवाकद्वयं यावत्पुरुषस्य नारायणस्यार्षम् ।

इन्द्राय वाचं वदतेन्द्राय वाचँ संवदतेन्द्रं वाजं जापयतेन्द्रं वाजं जय ॥ आ मा वाजस्य प्रसवो जगम्यादां[3] मा द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ एषा वः सा सत्या सं वागभूद्यामिन्द्रेण समर्द्ध्वम्। अजीजपत वनस्पतय इन्द्रं वाजं[5] विमुच्यध्वम् ॥ वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागमवजिघ्रतां वाजिनो वाजजितो वाजं जिगीवांसो बृहस्पतेर्भागे निमृजतां पत्नी३ स्वोरो-

---

१ य २ मिहीं ३ देमे ४ ध ५ वाचं

हावहि स्वोरोहावेहि स्वोरोहाव स्वोरोहाव स्वोरोहाव स्वोरोहौ। आयुर्यज्ञेन कल्पतां। मनो यज्ञेन कल्पतां। प्राणो यज्ञेन कल्पतां। चक्षुर्यज्ञेन कल्पतां। श्रोत्रं यज्ञेन कल्पतां। वाग्यज्ञेन कल्पतां। आत्मा यज्ञेन कल्पतां। ब्रह्मा यज्ञेन कल्पतां। पृष्ठं यज्ञेन कल्पतां। यज्ञो यज्ञेन कल्पतां। स्वर्देवा अगन्म। प्रजापतेः प्रजा अभूवन्नमृता अभूम॥ वाजाय स्वाहा। प्रसवाय स्वाहा। अपिजाय स्वाहा। क्रतवे स्वाहा। वाक्पतये स्वाहा। वसवे स्वाहा। स्वर्मौर्ध्नाय स्वाहा। मूर्ध्ने वैयशनाय[1] स्वाहा। व्यश्नव आन्त्याय स्वाहा। अन्त्याय भौवनाय स्वाहा। भुवनस्यपतये स्वाहा। प्रजापतये स्वाहा। अधिपतये स्वाहा। अन्नाय त्वा। वाजाय त्वा। वाजजित्यै त्वा॥

ॐ नमो बृहस्पतये ब्रह्मचर्याधराय नमः। अनुपं[2]-

---

१ वैनंशिनाय २ पमाकि

किरणाय नमः । प्रजापालपतये नमः । देवराजपुरोहिताय नमः । देवगुरवे नमः । इन्द्रमन्त्रिणे नमः । यजमानवरप्रदाय नमः ॥

तर्पणम् ॥ मेरुमूर्ध्नि समाक्रान्तो देवराजपुरोहितः । ज्ञाता यः सर्वशास्त्राणां स गुरुः प्रीयतां मम ॥

अनेन मन्त्रपाठेन (होमेन) आत्मनोर्वाङ्मनः कायोपार्जितपापनिवारणार्थमिन्द्राबृहस्पती सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥

प्रार्थना ॥ दण्डाक्षसूत्रधारी च कमण्डलुधरः सदा ।
पीतवर्णश्चतुर्बाहुः पातु नो वाक्पतिर्गुरुः ॥

॥ इतीन्द्राबृहस्पत्योर्ऋग्यजुः सूक्तानि ॥

॥ ओ३म् ॥

॥ सरस्वतीशुक्राभ्यां नमः ॥

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो अह्वयन्ते सरस्वती दाशुषे वार्य्यन्दात् ॥ अन्नात्परिस्रुतो रसँ ब्रह्मणा व्यपिबत्क्षत्रम् । ऋतेन सत्यमिन्द्रियं विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥

उद्यश्चन्द्रसहस्रकोटिसदृशीं पद्मानना हंसगां वाग्देवीं सुमनोहरैर्भुजयुगैर्वीणां तथा पुस्तकम् । पद्मं चामृतपूर्णरत्नचषकं दिव्याम्बरैर्भूषितां बिभ्रन्तीं वरदां मनोहरतन्वं वाग्देवतां चिन्तये ॥

सन्तप्तकाञ्चननिभं द्विभुजं दयालुं पीताम्बरं धृतसरोरुहद्वन्द्वशूलम् । क्रौञ्चासनमसुरसेवितपाद-

पद्मं शुक्रं स्मरे त्रिनयनं हृदयाम्बुजेऽहम् ॥

इयं षड्ना सारस्वतं त्रिजगत्यादिजगती त्रिष्टुबन्तम्। (शेषं गायत्रम्) ॥

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे। या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः। पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥ सरस्वति देवनिदो निबर्हय प्रजां विश्वस्य बृसयस्य मायिनः। उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥ प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामवित्र्यवतु ॥ यस्त्वा देवि सरस्वत्युपब्रूते धने हिते। इन्द्रं न वृत्रतूर्ये ॥ व३० ॥ त्वं देवि सरस्वत्यवा वाजेषु वा-

१ धा २ प ३ प्र

जिनि[1] । रदा पूषेव नः सनिम् ॥ उत स्या नः सर-
स्वती घोरा हिरण्यवर्तनिः । वृत्रघ्नी वष्टि सुष्टुति-
म् ॥ यस्या अनन्तो अहुतस्त्वेषश्चरिष्णुरर्णवः ।
अमश्चरति रोरुवत् ॥ सा नो विश्वा अति द्विषः
स्वसॄरन्या ऋतावरी । अतन्नहेव सूर्यः ॥ उत नः
प्रिया प्रियासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या
भूत् ॥ व ३ १ ॥ आपप्रुषी पार्थिवान्युरु रजो अन्त-
रिक्षम् । सरस्वती निदस्पातु ॥ त्रिषधस्था सप्तधा-
तुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्या भूत् ॥
प्र या महिम्ना महिनासु चेकिते[2] द्युम्नेभिरन्या अ-
पसामपस्तमा । रथ इव बृहती विभ्वने कृतोपस्तु-
त्या चिकितुषा सरस्वती ॥ सरस्वत्यभि नो नेषि
वस्यो माप स्फरीः पयसा मा न आ धक् । जुषस्व
नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म ॥

---

१ नी २ चि

श्रीशुक्रं दैत्यराजं दितिजगणनुतं दिव्यरूपं गुणाढ्यं शास्त्रज्ञं शुक्लकायं विविधगुणयुतं रम्यहारैः सुशोभम्। काणाक्षं केकिसंस्थं भुजगपतिपतिध्यानसंस्थं ग्रहेशं नानाभूषणभूषितं भृगुसुतं होमकाले भजेऽहम् ॥

अथ यजुः ॥ सोमो राज इति द्वावनुवाकौ कौञ्चा आङ्गिरसस्य । सुरावन्तमिति मृत्योः सांपारायणस्य ॥

सोमो राजामृतँ सुत ऋजीषेणाजहान्मृत्युम् । ऋतेन सत्यमिन्द्रियं विपानँ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ सोममद्भ्यो व्यपिबच्छन्दसा हँसः शुचिषत् । ऋतेन स० ॥ अद्भ्यः क्षीरं व्यपिबत्कुङ्ङाङ्गिरसो धिया । ऋतेन स० ॥ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रम् । ऋतेन स० ॥ रेतो मूत्रं विजहाति योनिं प्रविशदिन्द्रि-

यम् । गर्भो जरायुणावृत उल्वं जहाति जन्मना । ऋतेन स० ॥ वेदेन रूपे व्यपिबत्सुतासुतौ प्रजापतिः । ऋतेन स० ॥ दृष्ट्वा रूपे व्याकरोत्सत्यानृते प्रजापतिः । अश्रद्धामनृतेऽदधाच्छ्रद्धाँ सत्ये प्रजापतिः ॥ ऋतेन स० ॥ दृष्ट्वा परिस्रुतो रसँ शुक्रेण शुक्रं व्यपिबत् । पयः सोमं प्रजापतिः ॥ ऋतेन स० ॥

सुरावन्तं बर्हिषदँ सुवीरं यज्ञँ हिन्वन्ति महिषा नमोभिः । दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः ॥ यस्ते रसः सम्भृत ओषधीषु सोमस्य शुष्मः सुरया सुतस्य । तेन जिन्व यजमानं मदेन[1] सरस्वतीमश्विनाविन्द्रमग्निम् ॥ यमश्विना नमुचेरासुरादधि सरस्वत्यसुनो[2]दिन्द्रियाय । इमं तँ शुक्रं मधुमन्तमिन्द्रँ सोमँ[3] राजानमिह भक्षयामि ॥ यदत्र रिप्तँ रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । अहं त-

१ म २ स ३ सोमराजन०

दस्य मनसा शिवेन सोमँ राजानमिह भक्षयामि ॥
ॐ नमः शुक्राय इन्दुचर्याधराय नमः। सप्तकिरणाय नमः। मायाधिपतये नमः। असुरगुरवे नमः। यजमानवरप्रदाय नमः॥

तर्पणम् ॥ सोमतुल्या प्रभा यस्य योऽसुराणां गुरुस्तथा।
जेता च सर्वशत्रूणां स काव्यः प्रीयतां मम ॥

अनेन मन्त्रपाठेन (होमेन) आत्मनोर्वाङ्मनः कायोपार्जितपापनिवारणार्थं सरस्वतीशुक्रौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥

प्रार्थना ॥ श्वेतवर्णश्चतुर्बाहुः साक्षसूत्रकमण्डलुः ।
सरस्वत्याः परंधाम शुक्रो मेऽस्तु वरप्रदः ॥

॥ इति सरस्वतीशुक्रयोर्ऋग्यजुः सूक्तानि ॥

॥ ओ३म् ॥

॥ प्रजापतिशनैश्चराभ्यां नमः ॥

प्रजापते न हि त्वदन्य एता विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शँ योरभि स्रवन्तु नः ॥

ब्रह्माणं रक्तवर्णं सुरवरनमितं बाहुभिर्धारयन्तं रक्ताक्षिमक्षमालाममृतपरिमितं रक्तपात्रं सुशोभम्। हंसस्थं वेदमात्रासहितश्रुतिगणैर्वेष्टितं वामभागे नानाभूषणभूषितं स्मितमुखं होमकाले भजेऽहम् ॥

नीलाञ्जनाभं मिहिरेष्टपुत्रं ग्रहेश्वरं पाशभुजङ्गपाणिम्। सुरासुराणां भयदं द्विबाहुं शनिं स्मरे मानसपङ्कजेऽहम् ॥

शं वतीः षट्छान्तिरानुष्टुभं पञ्चम्यादि वृहती जगत्यौ शन्नः पञ्चोना शान्तिः ॥

शं वतीः पारयं[1]न्त्येतेदं [2]पृच्छस्व वचो य[3]था । अभ्यारन्तं स[4]माकेतुं य एवेदमिति ब्रवत्[5] ॥ [6]जायाकेतुं परिस्रुतं [7]भारती ब्रह्मवादिनी । सञ्ज्ञानानामहीजा[8]ता य एवेदमिति ब्रवत् ॥ इन्द्रस्तं किं विभुं प्रभुं [9]भानुनायञ्जुजोषति । ते[10]न सूर्यमरोचयद्येनेमे रोदसी उभे ॥ जुषस्वाग्ने अङ्गिरः काण्वं मेध्यातिथिम् । मा त्वा सोमस्य बर्बृहत्सुतस्य मधुमत्तमः ॥ [11]त्वमग्ने अङ्गिरः शोचस्व देववीतमः । आशन्त[12]मंशन्तमाभिरभिष्टिभिः [13]शान्ति स्वस्तिमकुर्वत ॥ शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षत्वोषधयः संप्रवर्धन्ताम् । शं नो द्यावापृथिवी शं प्रजाभ्यः शं नो [14]अस्तु द्विपदे शं चतुष्पदे ॥ व १३ ॥ शं न इन्द्राग्नी भवतामवोभिः शं

---

१ यन्त्येतेतं ( यन्तीदं ) २ पृच्छन्ति ३ युजा ४ यमाकेतं ५ न ६ जायाकेतं ७ भारतीर्ब्रह्मवर्धनीः ८ [illegible] ९ [illegible] ११ त्वा १२ मा १३ शान्तिः १४ एधि

न इन्द्रावरुणा रातहव्या । शमिन्द्रासोमा सुविताय
शं योः शं न इन्द्रापूषणा वाजसातौ ॥ शं नो भगः
शमु नः शंसो अस्तु शं नः पुरन्धिः शमु सन्तु रा-
यः । शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा
पुरुजातो अस्तु ॥ शं नो धाता शमु धर्ता नो अ-
स्तु शं न उरूची भवतु स्वधाभिः । शं रोदसी बृहती
शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥ शं नो
अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्वि-
ना शम् । शं नः सुकृतां सुकृतानि सन्तु शं न इषि-
रो अभिवातु वातः ॥ शं नो द्यावापृथिवी पूर्वहूतौ
शमन्तरिक्षं दृषये नो अस्तु । शं न ओषधीर्वनिनो
भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥ व२८ ॥

शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्व-
रुणः सुशंसः । शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्व-

ष्टा आभिरिह शृणोतु ॥ शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः । शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वरः शम्बस्तु वेदिः ॥ शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु । शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः । शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्बस्तु वायुः ॥ शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः । शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः ॥ व२९ ॥ शं नो देवा विश्वेदेवा भवन्तु शं सरस्वती सह धीभिरस्तु । शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥ शं नः सत्यस्य पतयो भवन्तु शं

नो अर्वन्तः शमु सन्तु गावः । शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ शं नो अज एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्य२ः शं समुद्रः । शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपाः ॥ आदित्या रुद्रा वसवो जुषन्तेदं[1] ब्रह्म क्रियमाणं नवीयः । शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ ये देवानां[2] यज्ञिया यज्ञियानां मनोर्यजत्रा[3] अमृता ऋतज्ञाः । ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ व३० ॥

अथ यजुः ॥ शं नो देवीरिति ब्रह्मणः ॥

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शँ योरभि स्रवन्तु नः ॥ एवेद्यूने युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ । सं जानते मनसा सञ्चिकित्रे-

---

१ जुषन्तामिदं २ देवानामृत्विजो यज्ञियासो ३ मनुर्यजत्रा

ऽध्वर्यवो धिषणापश्च देवीः ॥ ओषधीरिति मातरस्त- द्वो देवीरुपब्रुवे । रपाँसि विघ्नतीरिव[1] रक्षश्चातयमा- नाः ॥ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहँ शतं धामानि सप्त च ॥ गावो भगो गाव इन्द्रो मे अच्छान्गावः सोमस्य प्रथमस्य भक्षः । इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ न ता अर्वा रेणुकककटो[3] अश्नुते न सँस्कृतत्रमुप यन्ति ता अभि । उरुगायमभयं तस्य ता अनु[4] गावो मर्तस्य वि चरन्ति यज्वनः ॥ रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः[5] । विश्वा अधि श्रियोऽधित ॥ उप ते गा इवाकरं वृणीष्व दुहित- र्दिवः । रात्रि[6] स्तोमं न जिग्युषे[7] ॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आ-

१ त २ रप ३ काकाटो (ककाटो) ४ न्वा ५ चि ६ रात्रिः स्तोमं ७ षी

प्रा द्यावापृथिवी अन्तरिक्षँ सूर्य आत्मा जगतस्त-
स्थुषश्च ॥ अन्विदनुमते त्वं मन्[1]यासै शं[2] च नस्कृ-
धि । इ[3]षन्तोकायनोदधः प्र[4] ण आयूँषि तारिषः ॥
यत्ते नाम सुहवँ सु प्रणीतेऽनुमतेऽनुमतँ[5] सदा[6] नु ।
तेन त्वँ सुमतिं दिव्यं[7] मे इषं पिन्वं[8] विश्ववारं सुवी-
राम् ॥ राकामहं सुहवाँ सुष्टुती हुवे शृणोतु नः
सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमा-
नया दद[9]तु वीरं शतदायमुक्थ्यम् ॥ यास्ते राके सु
मतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषँ सुभगे
रराणा ॥ सिनीवालि पृथुष्टुके या देवानामसि स्व-
सा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥
याः सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै वि-
श्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ कुहूमहँ सु-

---

१ त्या २ षं ३ क्रत्वे दक्षाय नो हिनु ४ प्राण ५ अनुमतँ ६ सुदा ७ देव्यस्मे ८ पिन्वविश्ववारां ९ धा

कृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । या नो ददाति श्रवणं[1] पितॄणां तस्यै ते देवि हविषा विधेम ॥ कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । स्वसा देवानां महयन्त्यस्मे रायस्पोषं चिकितुषे दधातु ॥ धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ प्रजापतीरमयतु प्रजा इह धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृप्यपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ओं नमः शनैश्चराय यमचर्याधराय नमः । महाकिरणाय नमः । कालराज्याधिपतये नमः । छायासुताय नमः । उग्ररूपाय नमः । कृष्णशरीराय नमः । यजमानवरप्रदाय नमः ॥

तर्पणम् ॥ कृष्णवर्णः कृशाङ्गश्च कृष्णजीमूतसन्निभः । शनैश्चरः सूर्यपुत्रः स सौरः प्रीयतां मम ॥

---

१ द्रविणं

अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं प्रजापतिशनैश्वरौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥

प्रार्थना ॥ भिन्ननीलाञ्जनप्रख्यो वरदो गृध्रवाहनः ।
पातु नोऽर्कसुतः श्रीमान्ग्रहैः सर्वैः प्रपूजितः ॥

इति
प्रजापतिशनैश्वरयोर्ऋग्यजुः
सूक्तानि

॥ ओ३म् ॥

॥ गणपतिराहुभ्यां नमः ॥

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥

ध्याये देवं गणेशं गिरितनयसुतं रक्तवर्णं त्रिनेत्रं मालां दन्तं वहन्तं सततमपि वरैर्दक्षिणैर्बाहुभिस्स्वैः । वामैः शुभ्रं कुठारं सकलभयहरं मोदकानां च पात्रं सिंहस्कन्दे स्थितं तं प्रथितगुणनिधिं विघ्नराजं महेशम् ॥

शीतांशुमित्रान्तकमीड्यरूपं घोरं च वैडूर्यनिभ-

मबाहुम् । त्रैलोक्यरक्षापरमिष्टदं च राहुं ग्रहेन्द्रं हृदये भजेऽहम् ॥

आ याहि नव त्र्युष्णिगाद्यन्तानुष्टुप्मध्ये च[1] सौरी तदादीतिहासस्तुतिकर्मत्वादत्रिदेव एव ॥

आ याह्यद्रिभिः सुतं सोमं सोमपते पिब । वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥ वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः । वृषन्निन्द्र वृषभिर्वृत्रहन्तम ॥ वृषा त्वा वृषणं हुवे वज्रिञ्चित्राभिरूतिभिः । वृषन्निन्द्र वृषभिर्वृत्रहन्तम । ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा । युक्त्वा हरिभ्यामुप यासदर्वाङ्माध्यन्दिने सवने मत्सदिन्द्रः ॥ यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः । अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥ स्वर्भानोरधयदिन्द्र माया अवो दिवो वर्तमाना अवाहन् । गूढं

1 च सा सौरी ( चतस्रस्सौरी )

सूर्यं तमसापव्रतेन तुरेयेण ब्रह्मणाविन्ददत्रिः ॥ मा मामिमं तव सन्तमत्र इरस्या द्रुग्धो भियसा नि गारीत्। त्वं मित्रो असि सत्यराधास्तौ मेहावतं वरुणश्च राजा ॥ ग्राव्णो ब्रह्मा युयुजानः सपर्यन् कीरिणा देवान्नमसोपशिक्षन्। अत्रिः सूर्यस्य दिवि चक्षुराधात्स्वर्भानोरप माया अघुक्षत् ॥ यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः। अत्रयस्तमन्वविन्दन्नह्य[1]न्ये अशक्नुवन् ॥ इति ऋग्वेदे ॥

अथ यजुः ॥ प्र यो जज्ञेति रजनस्य कौ[1]णेयस्य ॥

प्र यो जज्ञे विद्वाँ अस्य बन्धुं वि[2]श्वादेवनां जनिमा विवक्ति। ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाभि प्रतस्थौ। महान्मही अ[3]स्कभायद्वि जातौ द्यां [4]द्विता [5]पार्थिवञ्च रजः। स बुध्नादाष्ट जनुषाभ्यग्रं वृहस्पतिर्देवता [6]तस्य सम्राट् ॥ गणा-

१ का २ विश्वानि देवो ३ अस्त ४ सद्म ५ पार्थिवांश्च ६ यस्य

नां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रव-
स्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृ-
ण्वन्नूतिभिः सीद सादनम् ॥ स सुष्टुभा स ऋक्वता
गणेन वलँ रुरोज फलिगं रवेण । बृहस्पतिरुस्रिया
हव्यसूदः कनिक्रदद्वावशतीरु[१]दाजत् ॥ अग्निरु[२]क्थे
पुरोहितो ग्रावाणो बर्हिरध्वरे । ऋचायामि म[३]रुतो
ब्रह्मणस्पतिर्देवाँ अवोवरेण्यम् ॥ उत्तिष्ठ ब्रह्मण-
स्पते देवयन्तस्त्वेमहे । उप प्रय[४]न्तु मरुतः सुदान-
व इन्द्र प्राशूर्भवा सचा ॥ [५]अर्यमायातु वृषभस्तु
[६]युष्मान्यन्ता वसूनि विधते तनूपाः । सहस्राक्षो गो-
त्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु ॥ ये ते
अर्यमन्बहवो देवयानाः पन्थानो राजन्दिव आच-
रन्ति । तेभिर्नो अद्य पथिभिस्सुगेभी रक्षा च नो
अधि च ब्रूहि देव ॥ अस्मे इन्द्राबृहस्पती रयिं

---

१ द्रा २ क्थो ३ ह ४ न्तो ५ आ ६ वि

धत्तँ शतग्विनम् । अश्वावन्तँ सहस्रिणम् ॥ बृह-
स्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरि-
वः कृणोतु ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य
जातः पतिरेक आसीत् । स दाधार पृथिवीं द्या-
मुतेमां कस्मै देवाय हविषा विधेम ॥ यः प्राणतो
निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव । ईशे
यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा वि-
धेम ॥ उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥ चित्रं देवानामुदगादनीकं
चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अ-
न्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च ॥ तरणिर्वि-
श्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रो-
चनम् ॥ दिवो रुक्म उरुचक्षा उदेति दूरे अर्थ-

स्तरणिर्भ्राजमानः । नूनं जनाः सूर्येण प्रसूता अय-
न्नर्थानि कृणवन्नपांसि ॥ ॐ नमो राहवे कालचर्या-
धराय नमः । अष्टसहस्रकिरणाय नमः । गन्धर्वा-
धिपतये नमः । सिंहिकागर्भसंभूताय नमः । धूम्रव-
र्णाय नमः । यजमानवरप्रदाय नमः ॥

तर्पणम् ॥ रक्ताक्षो धूम्रवर्णाभो विजितारिमहाबलः ।
अबाहुश्चान्तरिक्षस्थः स राहुः प्रीयतां मम ॥

अनेन मन्त्रपाठेन ( होमेन ) आत्मनो वाङ्मनः
कायोपार्जितपापनिवारणार्थं गणपतिराहू प्रीयेतां
प्रीतौ मे भवेताम् ॥

प्रार्थना ॥ चन्द्रार्कौ ग्रसते यश्च भीमः पर्वणि पर्वणि ।
राहुर्नवग्रहश्रेष्ठः स राहुः प्रीयतां मम ॥

॥ इति गणपतिराहोर्ऋग्यजुः सूक्तानि ॥

॥ ओ३म् ॥

॥ रुद्रकेतुभ्यां नमः ॥

आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः। अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपम-वसे कृणुध्वम् ॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समु-षद्भिरजायथाः ॥

शान्तं पद्मासनस्थं शशिधरमुकुटं हारकीयूरयु-क्तं गौरीभूषितवामभागममलं सिद्धैः सदा सेवितम्। नागेन्द्रेण विराजितं जपवटीं शूलं कपालं वरं बि-भ्रन्तं त्रिजगत्पतिं सुरवरं रुद्रं भजेऽहं सदा ॥

लाङ्गूलयुक्तं भयदं जनानां कृष्णाम्बुभृत्सन्नि-भमेकवीरम् । कृष्णाम्बरं शक्तित्रिशूलहस्तं केतुं

भजे मानसपङ्कजेऽहम् ॥

कद्रुद्राय नव रौद्रं तृतीया [1]मित्रावरुणौ चान्त्यस्तृचः सौम्यो गायत्र्यन्त्यानुष्टुप् ॥

कद्रुद्राय प्रचेतसे मीळुष्टमाय तव्यसे वोचेम शन्तमं हृदे ॥ यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥ यथा नो मित्रो वरुणो यथा रुद्रश्[2]चिकेतति । यथा विश्वे सजोषसः ॥ गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छँयोः सुम्नमीमहे ॥ यः शुक्र इव सूर्यो हिरण्यमि[3]व रोचते । श्रेष्ठो देवानां वसुः ॥ शं नः करत्यर्वते [4]सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ॥ अस्मे सोम [5]श्रियमधि नि धेहि शतस्य नृणाम् । महि श्रवस्तुविनृम्णाम् ॥ मा नः सोम परिबाधो मारातयो [6]जुहुरन्त । आ न इ[7]न्दो वाजे भज ॥ [8]यास्ते प्रजा

---

१ मैत्रावरुणी २ श्च ३ मे ४ सुगमेषाय मेष्यै ५ शिव ६ हू ७ न्द्रो ८ य

अमृतस्य परस्मिन्धामन्नृ[1]तस्य । मूर्धा नाभा सोम वे-
न आभूषन्तीः सोम वेदः ॥ इति ऋग्वेदे ॥

अथ यजुः ॥ रुद्राखुमिति सुभेषजस्य ( परायणस्य रुद्रैष अवाम्बपङ्क्तिर्भेषजं पुरस्ताद्बृहती त्र्यम्बकं मृत्युनाशनी अनुष्टुब्भागो भगस्य चापूपा एष भयनाशनं सर्वो रौद्रः ) ॥

रुद्राखुन्ते[2] पशुं करोमि तेन त्वा पशुभ्यो निरवदय । एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वहा ॥ अवाम्बरुद्रमदि[3]मह्यव देवं त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ भेषजङ्गवेऽश्वाय पुरुषाय सुं[4]गं मेषाय मेष्यै । अथो अस्मभ्यं भेषजं सुभेषजं यथाऽसति ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टि[5]वर्धनम् । उर्वारुकमिव बन्धनान्मृ[6]तोर्मुक्षीय मामृतात् ॥ भगस्थ भग-

---

१ नृ २ खुस्ते पशुः ३ दीमह्यव ४ सुखं ५ रयिपोषणम् ६ दितो मुक्षीय मामृतः

स्य वो लप्सी यैष ते रुद्र भागस्तेनावसेन परो मूज-
वतोऽतीहि कृत्तिवासाः पिनाकहस्तोऽवतत धन्वा ॥
एधोऽस्येधिषीमहि समिदसि समेधिषीमहि तेजोऽ-
सि तेजो मयि धेहि ॥

ऊँ नमः केतवे अग्निचर्याधराय नमः । सन्ध्यागर्भ-
सम्भूताय नमः । पुच्छवते नमः । धूम्रवर्णाय न-
मः । यजमानवरप्रदाय नमः ॥

तर्पणम् ॥ अग्निपुत्रो महातेजाः केतुः सर्वग्रहान्तकः ।
क्षोभयेद्यः प्रजाः सर्वाः स केतुः प्रीयतां मम ॥

अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः
कायोपार्जितपापनिवारणार्थं रुद्रकेतू सानुचरौ प्री-
येतां प्रीतौ मे भवेताम् ॥

प्रार्थना ॥ पीड्यन्ते पीडया यस्य देवगन्धर्वकिन्नराः ।
स केतुर्धूम्रवर्णाभः प्रीतो भवतु सर्वदा ॥

॥ इति रुद्रकेतोर्ऋग्यजुः सूक्तानि ॥

॥ ओ३म् ॥

॥ ब्रह्मध्रुवाभ्यां नमः ॥

---

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्। आसन्निषून्हृत्स्वसो मयो भून्य एषां भृत्यामृणधत्स जीवात् ॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयम् ॥

ब्रह्माणं रक्तवस्त्रममरमुनिगणैः सेवितं हंसवाहं दिव्यां रुद्राक्षमालां शुभकनकयुतां धारयन्तं सुरेशम् । आस्यैर्वेदान्वदन्तममृतद्रवमुचं गायत्रीप्राणनाथं वन्दे शान्तं सुरूपं सकलभयहरं सर्वलोकैर्नमस्यम् ॥

ऋषिप्रवीरं धृतपक्तिरूपमधोदृशं त्र्यम्बकमित्र-

---

१ वर

दिक्स्थम् । महौजसं चाञ्जनवर्णप्रख्यं ध्रुवं भजे मानसपङ्कजेऽहम् ॥

आ त्वा षड्ध्रुवो राज्ञः स्तुतिस्त्वानुष्टुप् ॥

आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥ इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥ इममिन्द्रो अदीधरद्ध्रुवं ध्रुवेण हविषा हविः । तस्मै सोमो अधि ब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयम् ॥ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः । ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि । अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥ इति ऋग्वेदे ॥

अथ यजुः ॥ ( हिरण्यवर्णां शकुनीनां समववृत्त्रं प्रतित्यं ज्योतिष्मतीं हंस इति प्रजापतेः ) इन्द्रस्येति प्रजा- [1]पतेर्वासिष्ठस्य [2]ब्रह्मणः ध्रुवस्य ॥

इन्द्रस्य वज्रोऽसि वाजसास्त्वयायं वाजँ सेन्मित्त्रावरुणयोस्त्वां प्रशास्त्रोः प्रशिषा युनज्मि विष्णोः क्रमोऽसि मरुतां प्रसवे जयाप्तं मनस्समिन्द्रियेणैषवज्रो वाजसातमस्तेन नौ पुत्रो वाजँ सेदियदस्यायुरस्यायुर्मे धेह्यूर्गस्यूर्जम्मे धेहि युङ्ङसि वर्चोऽसि वर्चो मे धेहि मित्त्रोऽसि वरुणोऽसि संविश्वैर्देवैर्नमो मात्रे पृथिव्यै प्रतित्यं नाम राज्यमधायि स्वान्तन्वं२ वरुणो [3]सुषोत् [4]शुचेर्मित्त्रस्य व्रत्या [5]अभूममन्महि महहृतस्य [6]नाम सर्वे [7]व्रता वरुणस्याभू[8]वन्नेमित्त्रयुररतीनतारीत् अशूशुभन्तयज्ञिया ऋतेन [9]नित्रिता नौ [10]जरिमाणमानट् स्योनासि सुषदासि स्योनामासीद्

१ पति २ ब्राह्मणध्रुवस्य ३ षु (श) ४ शुचि ५ अभूमागन्महि (अभूमामुन्महि) ६ धाम ७ व्राता ८ व्रति ९ नित्रितौनो १० [illegible]

सुषदामासीद ॥ निषसाद धृतव्रतो वरुणः पस्त्या-
स्वा । साम्राज्याय सुक्रतुः ॥ अग्नये गृहपतये स्वा-
हा । सोमाय वनस्पतये स्वाहा । इन्द्रस्य बलाय स्वा-
हा । मरुतामोजसे स्वाहा ॥ हँसः शुचिषद्वसुरन्तरि-
क्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतस-
द्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥

ब्रह्मँ३स्त्वं ब्रह्मासि सवितासि सत्यसवो ।
ब्रह्मँ३स्त्वं ब्रह्मासि मित्रोऽसि सुशेवः ।
ब्रह्मँ३स्त्वं ब्रह्मासीन्द्रोऽसि सत्यौजा ।
ब्रह्मँ३स्त्वं ब्रह्मासि वरुणोऽसि विश्वौजा ।
एष वज्रस्तेन मे रध्य दिशो अभ्यभूदयन्[1] ॥

प्रजापते न हि त्वदन्य एता विश्वा जातानि परि ता
बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु । असौ अमु-
ष्य पुत्रोऽमुष्यासौ पुत्रः वयं स्याम पतयो रयीणाम् ॥

---

१ म

अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहा ॥ ॐ नमो ध्रुवाय नरकारिचर्याधराय नमः । ऋषिप्रवराय नमः । पत्तिरूपाय नमः । भूर्भुवः स्वर्धात्रे[1] नमः । उत्तराशाधिपतये नमः । यजमानवरप्रदाय नमः ॥

तर्पणम् ॥ ध्रुवराजो महापुण्य उदीच्यां दिशि यः स्थितः ।
ऋषीणां प्रवरः श्रेष्ठः स ध्रुवः प्रीयतां मम ॥

अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं ब्रह्मध्रुवौ सानुचरौ प्रीयेतां प्रीतौ मे भवेताम् ॥

प्रार्थना । ध्रुवराजो महाप्राज्ञः पञ्चवर्षो महातपाः ।
ग्रहाणामधिपः श्रेष्ठः स ध्रुवः प्रीयतां मम ॥

॥ इति ब्रह्मध्रुवयोर्ऋग्यजुः सूक्तानि ॥

---

१ धंत्रे

॥ ओ३म् ॥

॥ अनन्तागस्त्याभ्यां नमः ॥

आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमाँ विश्वरूपम् । परिवृङ्धि हरसा माभिमंस्थाः शतायुषं कृणुहि चीयमानः ॥ अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥

पातालसंस्थं भुजगैः स्तुतं च सहस्रशीर्षं मुदितं द्विनेत्रम् । पीताम्बरं रत्नविभूषितं च भजाम्यनन्तं हृदि देवदेवम् ॥

दिवाकरापत्यककुम्निवासं वातापिशत्रुं विनिपीतवारिधिम् । वैखानसं विन्ध्यरिपुं त्वगस्त्यं ध्याये हृदऽब्जे घटजं ग्रहेशम् ॥

१ शिवाकृतिं

पूर्वीष्षड्वायापत्योर्लोपामुद्राया अगस्त्यस्य च
द्व्यृचाभ्यां रत्यर्थं संवादं श्रुत्वा अन्तेवासी ब्रह्मचार्य-
न्तं [त्रिष्टुभः] वृहत्याद्यमपश्यत् ॥

पूर्वीरहं शरदः शश्रमाणा दोषा वस्तोरुषसो
जरयन्तीः । मिनाति श्रियं जरिमा तनूनामप्यू नु
पत्नीर्वृषणो जगम्युः ॥ ये चिद्धि पूर्व ऋतसाप आस-
न्त्साकं देवेभिरवदन्नृतानि । ते चिदवासुर्नह्यन्तमापुः
समू[1] नु पत्नीर्वृषभिर्जगम्युः ॥ न मृषा श्रान्तं यदव-
न्ति देवा विश्वा इत्स्पृधो[2] अभ्यश्नवाव । जयावेदत्र
शतनीथमाजिं यत्सम्यञ्चा मिथुनावभ्यजाव ॥ नदः
स्य मा रुधतः काम आगन्नित आजातो अमुतः कु-
तश्चित् । लोपामुद्रा वृषणं नीरिणाति धीरमधीरा
धयति श्वसन्तम् ॥ इमं नु सोममन्तितो[3] हृत्सु पीत-
मुप ब्रुवे । यत्सीमागश्चकृमा तत्सु मृळतु पुलुका-

१ म २ त्स्पृ ३ प

मो हि मर्त्यः ॥ अगस्त्यः खनमानः खनित्रैः प्रजा-
मपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपो-
ष सत्या देवेष्वाशिषो जगाम ॥ इति ऋग्वेदे

अथ यजुः ॥ प्रियमिति देवर्षीणां ब्रह्मणाम्[1] ॥

प्रियवत्या[2]नुवाक्या श्रीवतीयाज्या यत्प्रियवती
प्रियमेवैनँ सजातानां करोति यच्छ्रीवती श्रियमेवैनं
गमयति द्विपदानुवाक्या चतुष्पदायाज्या द्विपदश्चै-
व चतुष्पदश्च पशूनवरुन्ध ऐन्द्रमेकादशकपालन्नि-
र्वपेन्मारुतं प्रैय्यङ्गवं चरुं तं पश्चाश्रृतं कुर्युर्यस्मा-
त्क्षत्त्रियाद्विळे[3]भ्यर्धश्चरेत्क्षत्त्रं वा इन्द्रो विरा[4]मारुतः
क्षत्त्रायैव विशमनुनियुं[5]क्ति तमनूच्यमाने पश्चात्प्रा-
ञ्चमुदाहरन्ति विशमेवास्मै पश्चादुपदधात्यसँसर्गा-
य मारुतं सप्तकपालं निर्वपेदैन्द्रमेकादशकपालम् ॥

यः कामयेत विशे च क्षत्त्राय च समदं कुर्या-

---

१ ब्राह्मणानाम् २ त्य ३ ळा ४ एम ५ युनक्ति

मिति क्षत्त्रं वा इन्द्रो विश्[1]मारुतो भाग[2]धेय एवैभ्यः समदं करोति मारुतस्य मारुतीमनूच्यैन्द्र्यायजेदैन्द्रस्यैन्द्रीमनूच्य मारुत्या यजेत्क्षत्त्रमेव विशः परिहाया[3]दत्ते विट्क्षत्त्रस्य ते अन्यान्यान्निर्णयत उभयतः पुरोळाशस्यावद्येद्यतरान्कामयेत पराजयेरन्नित्युभयत एव विशमुपदीपयति ताजक्पराजयन्त एतामेव निर्वपेत् ॥

यदा कामयेत कल्पेरन्निति तस्याः प्रसृ[4]तिं यजेद्भागधेयेनैवैनान्कल्पयति मारुतं सप्तकपालं निर्वपेद्यः, क्षत्त्रियो विशो [5]ज्यान्याबिभीयाद्ब्राह्मणो वा विड्वै [6]मरुतो भागधेयेनैवैनाञ्छमयत्यग[7]स्त्यस्यैतत्सूक्तं कया शुभीयं तस्य सामिधेनीष्वप्यनुब्रूयात्तस्य याज्यानुवाक्ये स्यातामगस्त्यो वै मरुद्भ्यः शतमुक्ष्णः [8]पृश्नीन्प्रौक्षत्तानिन्द्रायालभत तं मरुतः क्रुद्धा वज्र-

---

१ एम २ भागदेय ३ ध ४ प्रसृतं ५ ज्या ६ मा ७ गस्त्यैत ८ पृश्नीः

[1]मुद्धृत्याभ्यपतत्स एतत्सूक्तमपश्यत्तेनैनानशमयद्य-देतदनू[2]च्यते शान्त्यै ॥

नमो अगस्त्याय कुम्भयोनये नमः । वातापि-शत्रवे नमः । दक्षिणाशापतये नमः । पीतजलनिध-ये नमः । विन्ध्यारये नमः । यजमानवरप्रदाय नमः ॥

तर्पणम् ॥ अगस्त्यः कलशोद्भूतो दक्षिणस्यां दिशि स्थि-तः । [3]समुद्रं जीर्णवान्योसौ विन्ध्यारिः प्रीयतां मम ॥

अनेन मन्त्रपाठेन ( होमेन ) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थमनन्तागस्त्यौ सानुच-रौ प्रीयेतां प्रीतौ मे भवेताम् ॥

प्रार्थना ॥ दक्षिणाशापते देव नमस्ते कलशोद्भव ।
विन्ध्याचलमहावेगरोधकाय नमो नमः ॥

॥ इत्यनन्तागस्त्योर्ऋग्यजुः सूक्तानि ॥

---

॥ इति सूर्यादीनामेकादशग्रहाणामृग्यजुः सूक्तानि ॥

---

१ मुद्यताभ्यपतन्स ( मुद्धृत्याभ्यपतत्स ) २ चि ३ अब्धिर्जर्जरतां नीतो

॥ ओ३म् ॥

॥ वास्तोष्पतिदेवताभ्यो नमः ॥

---

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥

श्वेताम्बरः सकलदे[1]वगणार्चिताङ्घ्रिः काकालिमेचकतनुर्द्विभुजो गदाभृत् । सद्रत्नपात्रवरभूषितबाहुदण्डो दिश्यात्स वास्तुपुरुषो हृदयेप्सितं नः ॥

सितं त्र्यक्षं सौम्यमुखं द्विभुजं वास्तुपूरुषम् ।
अक्षसूत्रशूलकरं चिन्तये विघ्ननाशनम् ॥

वास्तोर्वास्तोष्पत्यं वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् ॥ अमीवहाष्टौ (वसिष्ठः) वास्तोष्पत्यमाद्या गायत्री शिष्टाः प्रस्वापिन्य उपनिषदुपाद्यास्तिस्र उपरिष्टाद्बृहत्यः शेषमानुष्टुभम् ॥

---

1 देवसमाश्रिताङ्घ्रिः

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥ वास्तोष्पते शग्मया[1] संसदा ते सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्[2] । सखा सुशेव एधि नः ॥ यदर्जुन सारमेय[3] दतः पिशङ्ग यच्छसे । वि[4]व भ्राजन्त ऋष्टय उप स्रक्केषु बप्सतो नि षु स्वप ॥ स्तेनं राय सारमेय तस्करं वा पुरः[5] सर । स्तोतॄनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप ॥ त्वं सूकरस्य दर्दृहि तव दर्दर्तु

१ शं २ त् ३ त ४ विवि ५ नः

सूकरः । स्तोतॄनिन्द्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप ॥ सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः । ससन्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥ य आस्ते यश्च चरति यश्च पश्यति नो जनः । तेषां संहन्मो अक्षाणि यथेदं हर्म्यं तथा ॥ सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् । तेना सहस्येना वयं नि जनान्त्स्वापयामसि ॥ प्रोष्ठेशया वह्येशया नारीर्यास्तल्पशीवरीः । स्त्रियो याः पुण्यगन्धास्ताः सर्वाः स्वापयामसि ॥

ब्रह्मणे नमः । कूर्माय नमः । ध्रुवाय नमः । अनन्ताय नमः । हरये नमः । लक्ष्म्यै नमः । कमलाय नमः । शिख्यादिभ्यः पञ्चचत्वारिंशद्वास्तोष्पतिदेवताभ्यो नमः ॥

अधोमुखस्थितो देवः पृथिवीधृश्च[1] व्यापकः ।

---

[1] पृथिव्यां सर्वव्यापकः ।

शम्भोश्च वल्लभो नित्यं स वास्तुः प्रीयतां मम ॥ अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं । शिख्यादयः पञ्चचत्वारिंशद्वास्तोष्पतिदेवताः प्रीयन्तां प्रीता मे भवन्तु ॥

॥ इत्यृग्वेदे वास्तोष्पतिसूक्तम् ॥

॥ ओ३म् ॥

॥ राकादेवताभ्यो नमः ॥

गृत्समदऋषिः । द्वयो राका द्वयोः सिनीवाली अन्त्याया गुंगू सिनीवाली राका सरस्वतीन्द्राणी वरुणान्यश्च देवता द्वेजगत्यावन्त्यास्तृचोऽनुष्टुप् ॥

राकामहं सुहवां[1] सुष्टुती[2] हुवे शृणोतु नः सुभगा[3] बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ यास्ते राके सु मतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो

१ वा २ तीं ३ गां

अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढिनः ॥ याः सुबाहुः सुङ्गुरिः सुषूमा बहुसूवरी । तस्यै विशपत्न्यै हविः सिनीवाल्यै जुहोतन ॥ या गुङ्गूर्या सिनीवाली या राका या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥

इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । नह्यस्या अपरं चनं जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यँ हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥ कुहूमहँ सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । या नो ददाति श्रवणं पितृणां तस्यै ते देवि हविषा विधेम ॥ कुहूर्देवानाममृतस्य पत्नी

१ सुभगा २ नु ३ णी ४ वा

हव्या नो अस्य हविषः शृणोतु । स्वसा देवानां म-
हयन्त्यस्मे रायस्पोषं चिकितुषी दधातु ॥ धाता द-
दातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन
वावनत् ॥ प्रजापतीरमयतु प्रजा इह धाता दधा-
तु समनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो
मयि पुष्टिं पुष्टिपतिर्दधातु ॥

॥ देवासुराणामार्षम् ॥ तवाश्रिये इति बार्हस्पत्योयं त्रिकः जगतीश्छन्दः ॥

तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो य-
दङ्गिरः । इन्द्रेण युजा तमसा परीवृतं बृहस्पते नि-
रपामौब्जो अर्णवम् ॥ बृहस्पते अति यदर्यो अ-
र्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऋ-
तप्रजात तदस्मासु द्रविणं धेहि चित्रम् । बृहस्प-
तिः समजयद्वसूनि महो व्रजान्गोमतो देव एषः । अ-
पः सिषासन्त्स्वररप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥

यमो दाधार पृथिवीं य्यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम् ॥ यथा पञ्च यथा षडयथा पञ्च दशर्षयः । यमं यो विद्यात्स ब्रूयाद्यथैकर्षिर्विजानते ॥ त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद्बृहत् । गायत्रीत्रिष्टुप्छन्दाँसि सर्वा ता यम आहिता ॥ मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्रमीढ्वः । सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥ त्वेषं वयँ रुद्रं यज्ञसाधनं वङ्कुं कविमवसे नि ह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥ अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः । क्षयन्नस्मभ्यमसुर प्र-

चेता राजन्नेनाँसि शिश्रथः कृतानि ॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचके ॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः । अहेळमानो वरुणेह बोध्युरुशंस मान आयुः प्र मोषीः ॥

॥ महाव्याहृतयः प्रजापतेः ॥

ओं भूर्लोकाय नमः । ओं भुवोलोकाय नमः । ओं स्वर्लोकाय नमः । ओं भूर्भुवःस्वर्लोकाय नमः ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेताँसि जिन्वति ॥ उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह माधयध्यै । उभा धाताराविषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥ अयमिह प्रथ-

मो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥

स्तोमोदेवानाम् ॥

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वते ॥ अस्य प्रत्नामनुद्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ आरुणेः । कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥ परि ते दूळभो रथोऽस्माँ२ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥ प्रत्यग्ने हरसा हरः

शृणीहि विश्वतः प्रति । यातुधानस्य रक्षसो बलं वि रुज वीर्यम् ॥ यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तं न ऊतिभिर्विद्विषो विमृधो जहि ॥ ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुषदो[1] महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥

राकादेवताभ्यो नमः[2] । त्रिकादेवताभ्यो नमः । सिनीवालीदेवताभ्यो नमः । रौद्रीदेवताभ्यो नमः । यामीदेवताभ्यो नमः । वारुणीदेवताभ्यो नमः । बार्हस्पत्यदेवताभ्यो नमः । ॐ भूर्देवताभ्यो नमः । ॐ भुवर्देवताभ्यो नमः । ॐ स्वर्देवताभ्यो नमः । ॐ भूर्भुवस्स्वर्देवताभ्यो नमः ॥ ॥ इति ऋग्वेदे राकादि देवतास्सूक्तम् ॥ अथ क्षेत्रपालसूक्तम् ॥

क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गाम-

---

१ क्षितो २ स्वाहा

श्वं पोषयित्न्वा[1] स नो मृळातीदृशे ॥ क्षेत्रस्य पते म-
धुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं
घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥ मधुम-
तीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् । क्षे-
त्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥

ध्यानम् भ्राजच्चन्द्रजटाधरं त्रिनयनं नीलाद्रितुल्यप्रभं
दोर्दण्डात्तगदाकपालमरुणं स्रग्वस्त्रगन्धोज्ज्वलम् ।
घण्टामेखलघर्घरध्वनिमिलज्झाङ्कारभीमं विभुं
वन्दे संहितसर्पकुण्डलधरं श्रीक्षेत्रपालं सदा ॥

आशाम्बरं वामविलोलनेत्रं चतुर्भुजं पुण्यजनै-
रुपेतम् । लम्बोदरं पाशधरं विलोलं तं क्षेत्रपालं
प्रणतोऽस्मि नित्यम् ॥

क्षेत्रस्याष्टौ तिस्रः क्षेत्रपत्यः शुनायैका परा पुर-
उष्णिक्सान्त्या च शुनासीराभ्यामुपान्त्ये सीतायै[2]

१ त्वा २ सीतायैते

( द्वितीया तृतीयाष्टम्यस्त्रिष्टुभः ) अनुष्टुभावाद्या चतुर्थी च ॥

क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥ मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् ॥ क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् । शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥ शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः । तेनेमामुपसिञ्चतम् ॥ अर्वाची सुभगे भव सीते वन्दामहे त्वा । यथा नः सुभगासासि यथा नः सुफलासासि ॥ इन्द्रः सीतां नि गृह्णातु तां पूषानु यच्छ-

---

१ नि

तु । सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥ शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः । शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम् ॥

पूर्वे हेरुकाय नमः[1] । आग्नेये त्रिपुरान्तकाय नमः । दक्षिणे वेतालाय नमः । नैर्ऋते अग्निजिह्वाय नमः । पश्चिमे करालाय नमः । वायवे करालिने नमः । उत्तरे एकपादाय नमः । ईशाने भीमरूपिणे नमः । ऊर्ध्वे[2] वीरभद्राय नमः । पाताले हाटकेश्वराय नमः । मध्ये राजराजेश्वराय नमः । समस्तक्षेत्रपालयागदेवताभ्यो नमः । हेरुकादीनि चान्यानि वटुकाश्चरकादयः । भूपातालखदिग्व्यापी क्षेत्रेशः प्रीयतां मम ॥ अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं हेरुकादयः क्षेत्रेशाः प्रीयन्तां

१ स्वाहा २ आकाशे तारकाख्याय नमः

प्रीताः सन्तु ॥

॥ इति क्षेत्रपालसूक्तम् ॥

॥ उपदेवसूक्तम् ॥

भूतो भूतेषु चरति प्रविष्टः सभूतानामधि पतिर्बभूव । तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ उर्वीरोदसी वरिवः कृणोतु क्षेत्रस्य पत्नीरधिवोचतं नः । तौ मे द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः ॥ यो ह वै देवान्साध्यान्वेद सिद्ध्यत्यस्मादेमिमा[1]वल्लोकाः । देवाः साध्याः सिद्धं ह्यस्यै सिद्धमस्मै सिद्धममुष्यै य एवं वेद सिद्ध्यत्यस्मै ॥ यो विश्वचक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमते संय्यजत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ यस्य व्रत-

१ वा

मुप तिष्ठन्त आपो यस्य व्रते पशवो यन्ति सर्वे ।
यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे जोह-
वीमि ॥ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्वि-
पदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी
सहस्राक्षरा परमे व्योमन् ॥ दिव्यँ सुपर्णं वायसं
बृहन्तमपां गर्भं दर्शतमोषधीनाम् । अभीपतो वृष्टि-
भिस्तर्पयन्तँ सरस्वन्तमवसे जोहवीमि ॥ सरस्वतीं
देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं
सुकृतो अह्वयन्त[1] सरस्वती दाशुषे वार्यं दात ॥ स-
रस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न
आ धक् । जुषस्व नः सख्या वेश्या च मा त्वत्क्षे-
त्राण्यरणानि गन्म ॥ पावका नः सरस्वती वाजे-
भिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥ चोदयित्री
सूनृतानां चेतन्ती सुमतीनां । यज्ञं दधे सरस्वती ॥

1 न्ते

महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे । ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः ॥

॥ अथ सर्वदेवसूक्तम् ॥

ध्यानम् ॥ सर्वे देवा विचित्रा मुनिगणसहिता ब्राह्मणादित्यवर्णा नागा नद्या गजेन्द्रा हयगणसहिता विश्वरूपा विहङ्गाः । दैत्यग्राहा जलेशा ग्रहगणसहितास्तारकानेकसंख्याः संलीना यस्य सर्वे वपुषि स भ-

१ त्रि

गवान्सर्वदेवोऽवतान्नः ॥

नानावक्त्रधरा महाकृतिधराः स्रक्चन्दनालंकृता
नानाशस्त्रधराः सितासितहरिद्रक्ताम्बरधारिणः ।
नानाविष्टरसेविनश्च द्विचतुर्बाहून्दधानाः शुभाः
सर्वेदेवाः श्रिये नस्त्रिभुवनसदनाः कालविध्वंसनाश्च॥

हयोऽष्टौ प्रति क्षत्रोऽन्त्ये देवपत्न्यो द्वितीया त्रिष्टुबन्त्या च ॥

हयो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम् । नास्या वश्मि विमुचं नावृतं पुनर्विद्वान्पथः पुरएत ऋजु नेषति ॥ अग्न इन्द्र वरुण मित्र देवाः शर्धः प्र यन्त मारुतोत विष्णो । उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषन्त ॥ इन्द्राग्नी मित्रावरुणादितिं स्वः पृथिवीं द्यां मरुतः पर्वताँ अपः । हुवे विष्णुं पूषणं ब्रह्मणस्पतिं

भगं नु शंसं सवितारमूतये ॥ उत नो विष्णुरुत
वातो अस्रिधो द्रविणोदा उत सोमो मयस्करत् ।
उत ऋभव उत राये नो अश्विनोत त्वष्टोत विभ्वा-
नु मंसते ॥ उत त्यन्नो मारुतं शर्ध आ गमद्दिविक्ष-
यं यजतं बर्हिरासदे । बृहस्पतिः शर्म पूषोत नो य-
मद्वरूथ्यं १ वरुणो मित्रो अर्यमा ॥ उत त्ये नः प-
र्वतासः सुशस्तयः सुदीतयो नद्य १ स्त्रामणे भुवन् ।
भगो विभक्ता शवसावसा गमदुरुव्यचा अदितिः
श्रोतु मे हवम् ॥ देवानां पत्नीरुशतीरवन्तु नः प्राव-
न्तु नस्तुजये वाजसातये । याः पार्थिवासो या अ-
पामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥ उ-
त ग्ना व्यन्तु देवपत्नीरिन्द्राण्य १ ग्नाय्यश्विनीराट् ।
आरोदसी वरुणानी शृणोतु व्यन्तु देवीर्यऋतुर्ज-
नीनाम् ॥ पृथिव्यै नमः । दिवे नमः । अन्तरिक्षा-

य नमः । अह्ने नमः । सर्वदैवतेभ्यो नमः । इहरा-
ष्ट्राधिपतिदेवताभ्यो नमः । अखण्डब्रह्माण्डदेवता-
भ्यो नमः ॥

पृथिवीं द्यां चान्तरिक्षं समस्तभुवनानि च ।
अमरा येवतिष्ठन्ति प्रीयन्तां ते सदा मम ॥
अनेन मन्त्रपाठेन ( होमेन ) आत्मनो वाङ्मनः का-
योपार्जितपापनिवारणार्थं सर्वेदेवाः प्रीयन्तां प्रीताः
सन्तु ॥ इति सर्वदैवतसूक्तम् ॥

---

॥ अथ रात्रिसूक्तम् ॥

शूलाब्जपाशाङ्कुशहस्तपद्मां चतुर्भुजां धूम्रनि-
भां त्रिनेत्राम् । सिंहासनस्थां धृतपीतवस्त्रां ध्याये
महेशीं हृदि कालरात्रीम् ॥

कालाम्बुवाहद्युतिमिन्दुवक्त्रां तारावलीशोभिप-

१ सर्वदैवताः

योधराढ्याम् । कपालपाशाङ्कुशशूलहस्तां नीला-
म्बरां यामवतीं नमामि ॥

रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रि-
स्तवो[1] गायत्रम् ॥

रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः । विश्वा अ-
धि श्रियोऽधित ॥ ओर्वप्रा अमर्त्या निवतो देव्यु१-
द्वतः । ज्योतिषा बाधते तमः ॥ निरु स्वसारमस्कृतो-
षसं देव्यायती । अपेदु हासते तमः ॥ सा नो अद्य
यस्या वयं नि ते यामन्नविक्ष्महि । वृक्षे न वसतिं
वयः ॥ नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षि-
णः । नि श्येनासश्चिदर्थिनः ॥ यावया वृक्यंवृकं यव-
य स्तेनमूर्म्ये । अथा नः सुतरा भव ॥ उप मा पेपिश-
त्तमः कृष्णं व्यक्तमस्थित । उष ऋणेव यातय ॥ उ-
प ते गा इवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न

१ स्तुतिः

जिग्युषे ॥ आ रात्रि पार्थिवँ रजः पितुरप्रायि धाम-
भिः । दिवः सदाँसि बृहती वितिष्ठस आ त्वेषं वर्त-
ते तमः ॥ येतेरात्रीनृचक्षसो युक्तासो नवतिर्नव ।
अशीतिः संत्वष्टा उतोतेसप्तसप्ततीः ॥ रात्रीं प्रपद्ये
जननीं सर्वभूतनिवेशनीम् । भद्रां भगवतीं कृष्णां
विश्वस्य जगतो निशाम् ॥ संवेशिनीं संयमिनीं ग्रह-
नक्षत्रमालिनीम् । प्रपन्नोऽहं शिवां रात्रीं भद्रे पार-
मशीमहि ॥ कालरात्र्यै नमः । तालरात्र्यै नमः ।
शिवरात्र्यै नमः । रायरात्र्यै नमः । महारात्र्यै नमः ।
रौद्ररात्र्यै नमः । सौख्यरात्र्यै नमः ॥ भद्रा भग-
वती कृष्णा तारा काली च पार्वती । मङ्गला शिव-
रात्री च रात्रयोऽष्टौ प्रकीर्तिताः ॥ अनेन मन्त्रपा-
ठेन (होमेन) आत्मनो वाङ्मनः कायोपार्जितपापनि-
वारणार्थं रात्रिदेव्याः प्रीयन्तां प्रीताः सन्तु ॥

१ पितरः प्रयु २ रात्रिञ्चराः (रात्रिचराः)

## ॥ अथ षड्तुसूक्तम् ॥

चूतप्रवालरसनिर्भरमञ्जुकण्ठाः
कूजन्ति कोकिलगणा गहनेषु यत्र ।
वैतालिका इव मनोभवबोधनाय
सोऽयं वसन्तसमयः सुखदोऽस्तु मह्यम् ॥
नानावर्णधरं वसन्तममलं ग्रीष्मं च रक्ताम्भरं
वर्षा मेघकदम्बमेचकतनूः संवर्षयन्ती सदा ।
सर्वाशापरिपूरिकां च शरदं पीताम्बरां सत्फलां
हेमन्तं शिशिरं तुषारविमलं षट्कमृतूनां भजे ॥

---

स नारमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्याः पुरुषोऽजायत स नारमत स प्राद्रवत्तस्मिन्नजुहोत्त-स्या आहुत्या अश्वोऽजायत तस्मात्पुरुषश्चाश्वश्च

नक्तं प्रत्यञ्चौ न सु विज्ञाय[1]न्ते इव स नारमत स प्राद्र-
वत्तस्मिन्नजुहोत्तस्या आहुत्या गौरजायताविरजाय-
ताजाजायत यवोऽजायत व्रीहिरजायतैताभ्यो वै
सप्तभ्य आहुतिभ्यः सप्तेमे ग्राम्याः पशवोऽसृजन्त
स नारमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्या व-
सन्तोऽजायत ग्रीष्मोऽजायत वर्षा अजायन्त शर-
दजायत हेमन्तोऽजायत स त्रयोद[2]श्यामाहुत्यामुद्य-
तायामबिभेत्तं प्रत्यङ्ङुपापद्यत तं पाणितः प्राविश-
त्तस्मात्पाण्योर्लोम नास्त्यग्निधानँ ह्येतत्तस्माद्धस्ता-
भ्यामग्निर्म[3]थ्यमानो जायते ॥ तस्माद्धन्यमा[4]नौ ह-
स्तौ प्रतिगृह्णात्यग्ना [5]इव तत्त्राणामिश्लतेऽग्निं वै पश-
वो[6]ऽनूपतिष्ठन्ति पशू[7]नग्नि[8]ः प्रैनं पशवो विशन्ति प्र प-
शून्विशति य एवं वेद तामाहुतिमप्सु प्रासिञ्चत्त-
तः शिशिरमजायत तस्मात्तत्क्रूरतमं नहि तद्धुतान्ना-

१ ये २ शमाहुत्या अद्यताया अबि ३ थ्य ४ नो ५ ए ६ ऽनूपतिष्ठन्ते ७ नाग्निं ८ यं

हुतादजायत साहुतिरपो दग्धुमु[१]पाक्रामत तत आ-
पोऽग्नये वज्रोऽभवँस्तस्मात्प्रोक्षन्नग्निंर्न प्रापयेद्यत्प्रा-
पयेद्[२]तेन यजते तामाहुतिमोष[३]धीषु न्यद[४]धत्तस्मादो-
षधयोऽनभ्यक्ता रेभन्त ओषधिभ्योऽधि पशवः पशु-
भ्योऽधि प्रजास्तदेतच्छिशिर आज्यँ [५]स्यायत्यग्नये
तस्माच्छिशिर[६]कच्चय उपादुत्यः प्रियमेव धामाग्नये
प्रादात्सोऽस्मा अन्नाद्यं प्रयच्छत्यन्नादो भवति य
एवं वेद ॥ २ ॥

वसन्तेनर्तुना देवा वसवस्त्रिवृता स्तुताः । रथ-
न्तरेण तेजसा हविरिन्द्रे वयो दधुः ॥ ग्रीष्मेण
ऋतुना देवा रुद्राः पञ्चदशे स्तुताः । बृहता यशसा
बलँ हविरिन्द्रे वयो दधुः ॥ वर्षाभिर्ऋतुनादित्याः
स्तोमे सप्तदशे स्तुताः । वैरूपेण विशौजसा हवि-
रिन्द्रे वयो दधुः ॥ शरदेनर्तुना देवा एकविंश ऋ-

१ पाक्रमत्तत इ आपो० ग्निं न २ द्धतेन यजेत ३ धि ४ धा ५ श्या ६ रे कत्त ७ त्याः ८ तम्

भवः स्तुताः । वैराजेन श्रिया श्रियँ हविरिन्द्रे वयो दधुः ॥ हेमन्तेनर्तुना देवास्त्रिणवे मरुतः स्तुताः । बलेन शक्करीः सहो हविरिन्द्रे वयो दधुः ॥ शैशिरेणर्तुना देवास्त्रयस्त्रिंशेऽमृताः स्तुताः । सत्येन रेवतीः क्षत्रँ हविरिन्द्रे वयो दधुः ॥ अ १ स्र ३४ ॥

अग्नये नमो गायत्र्यै नमस्त्रिवृते नमो रथन्तराय नमो वसन्ताय नमः प्राच्यै दिशे नमः प्राणाय नमो वसुभ्यो नमः । अ १ । स्र ७ ॥ इन्द्राय नमः स्त्रिष्टुभे नमः पञ्चदशाय नमो वृहते नमो ग्रीष्माय नमो दक्षिणायै दिशे नमो व्यानाय नमो रुद्रेभ्यो नमः । अ २ स्र ८ ॥ मरुद्भ्यो नमो जगत्यै नमः सप्तदशाय नमो वैरूपाय नमो वर्षाभ्यो नमः प्रतीच्यै दिशे नमोऽपानाय नम आदित्येभ्यो नमः अ ३ । स्र ९ ॥ विश्वेभ्यो देवेभ्यो नमोऽनुष्टुभे नम

एकविंशाय नमो वैराजाय नमः शरदे नम उदीच्यै दिशे नमः समानाय नमः चन्द्रमसे नमः । अ४ । स्व १० ॥ मित्रावरुणाभ्यां नमः पाङ्क्त्यै[1] नमस्त्रिणवत्रयस्त्रिंशाभ्यां नमः शाक्वररैवताभ्यां नमो हेमन्तशिशिराभ्यां नम ऊर्ध्वायै दिशे नम उदानाय नमो विष्णवे नमः । अ५ । स्व१० ॥ पृथिव्यै नमोऽग्नये नमो भूताय नमश्चक्षुषे नमोऽन्तरिक्षाय नमो वायवे नमो भव्याय नमः श्रोत्राय नमो दिवे नमः सूर्याय नमो भविष्यते नमो मनसे नमः । अ६ । स्व११ ॥ सौत्राः ११ ॥

वसन्ताय नमः । ग्रीष्माय नमः । वर्षाभ्यो नमः । शरदे नमः । हेमन्ताय नमः । शिशिराय नमः । षड्ऋतुभ्यो नमः ॥ वसन्तश्च तथा ग्रीष्मो वर्षाश्चैव शरत्तथा । हेमन्तः शिशिरश्चैव प्रीयन्तां[2] ऋतवो मम ॥

१ पाङ्क्त्यौष्णिहाभ्यां २ प्रीयन्तां ते ममर्तवः ॥

अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं षड्ऋतवः प्रीयन्तां प्रीताः सन्तु ॥

॥ इति षड्ऋतुसूक्तम् ॥

---

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ गायत्र्यै नमः ओं भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ओं ॥ ओं सावित्र्यै नमः ओं भूर्भु० ॥ ओं सरस्वत्यै नमः ओंभूर्भु० ॥ तद्विष्णोः परमं पदं सदापश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रा-

सो विपण्यवो जागृवांसः समिन्धते । विष्णोर्यत्पर-
मं पदम् ॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा
नाति विध्यन्ति शूराः । तन्नस्त्रायतां तन्वः सर्वतो म-
हदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ ॥

---

॥ तर्पणमेकत्र ग्रहाणाम् ॥

अनेन मन्त्रहोमेन (पाठेन) आत्मनो वाङ्मनः
कायोपार्जितपापनिवारणार्थं । अमुकदेवतासन्तोष-
णार्थं । धर्मार्थकाममोक्षफलप्राप्त्यर्थं । ग्रहपीडा-
निवारणार्थं ॥ महागणपतिः कुमारः श्रीः सरस्व-
ती लक्ष्मीः विश्वकर्मा द्वारदेवताः प्रजापतिः ब्रह्मा
कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चतुर्वेदेश्वराः
सानुचराः मासपतिर्नारायणः दुर्गा त्र्यम्बकः वरु-
णः यज्ञपुरुषः अग्निष्वात्तादयः पितृगणदेवताः ॥

भगवान्वासुदेवः सङ्कर्षणः प्रद्युम्नः अनिरुद्धः सत्यः पुरुषः अच्युतः माधवः गोविन्दः सहस्रनामा विष्णुः लक्ष्मीसहितः श्रीनारायणः ॥

भगवान्भवः देवः शर्वः देवः रुद्रः देवः पशुपतिः देवः उग्रः देवः भीमः देवः ईशानः देवः ईश्वरः देवः महादेवः पार्वतीसहितः परमेश्वरः ॥

भगवान्विनायकः एकदन्तः कृष्णपिङ्गलः गजाननः लम्बोदरः बालचन्द्रः हेरम्भः आखुरथः विघ्नेशः विघ्नभक्षः वल्लभासहितः श्रीमहागणेशः ॥

भगवान् क्लींकांकुमारः षण्मुखः मयूरवाहनः पार्वतीनन्दनः सेनाधिपतिः कुमारः ॥

भगवान् ह्रांह्रींसः सूर्यः सप्ताश्वः अनाश्वः एकाश्वः नीलाश्वः प्रत्यक्षदेवः तेजोरूपः परमार्थसारः प्रभासहितः आदित्यः ॥

भगवती अमा कामा चार्वङ्गी टङ्कधारिणी तारा पार्वती यक्षिणी श्रीशारिकाभगवती श्रीशारदाभगवती श्रीमहाराज्ञाभगवती श्रीज्वालाभगवती भीडाभगवती वैखरीभगवती जयाभगवती विजयाभगवती तोतुलाभगवती शीतलाभगवती शैलाभगवती वितस्ताभगवती गङ्गाभगवती यमुनाभगवती सिद्धलक्ष्मीः महालक्ष्मीः महात्रिपुरसुन्दरी सहस्रनाम्नी देवी भवानी अभयङ्करी देवी भवानी क्षेमङ्करी भवानी सर्वशत्रुघातिनी इहराष्ट्राधिपतिः अमुकभैरवः ॥ इन्द्रः सुराधिपतिः वज्रहस्तः शचीसहितः। अग्निः तेजोऽधिपतिः शक्तिहस्तः स्वाहासहितः। यमः प्रेताधिपतिः दण्डहस्तः यामीसहितः। नैर्ऋतिः रक्षोऽधिपतिः खड्गहस्तः दितिसहितः। वरुणः जलाधिपतिः पाशहस्तः वारुणी-

सहितः । वायुः जीवाधिपतिः ध्वजहस्तः प्राणशक्तिसहितः । कुवेरः यक्षाधिपतिः गदाहस्तः यक्षिणीसहितः । ईशानः सर्वाधिपतिः त्रिशूलहस्तः उमासहितः । ब्रह्मा वेदाधिपतिः पद्महस्तः गायत्रीसहितः । विष्णुः त्रैलोक्याधिपतिः चक्रहस्तः लक्ष्मीसहितः ॥ अनन्तादयः । अष्टौ कुलनागदेवताः ।

उदयंस्तु महाभानुस्तेजसा चाभयङ्करः ।
सहस्त्ररश्मिदीप्तश्च ह्यादित्यः प्रीयतां मम ॥

द्विजराजो महापुण्यस्तारापतिर्विशेषतः ।
ओषधीनां च यो राजा स सोमः प्रीयतां मम ॥

येनार्जिता जगत्कीर्तिर्भूमिपुत्रेण शाश्वती ।
शत्रवश्च हता येन भौमेन महितात्मना ।
स प्रीयतां तु भौमोऽद्य तुष्टो भूयात्सदा मम ॥

बुधो बुद्धिप्रदाता च सोमपुत्रो महाद्युतिः ।

आदित्यस्य रथे तिष्ठन्स बुधः प्रीयतां मम ॥
मेरुमूर्ध्नि समाक्रान्तो देवराजपुरोहितः ।
ज्ञाता यः सर्वशास्त्राणां स गुरुः प्रीयतां मम ॥
सोमतुल्या प्रभा यस्य योऽसुराणां गुरुस्तथा ।
जेता च सर्वशत्रूणां स काव्यः प्रीयतां मम ॥
कृष्णवर्णः कृशाङ्गश्च कृष्णजीमूतसन्निभः ।
शनैश्चरः सूर्यपुत्रः स सौरः प्रीयतां मम ॥
रक्ताक्षो धूम्रवर्णाभो विजितारिमहाबलः ।
अबाहुश्चान्तरिक्षस्थः स राहुः प्रीयतां मम ॥
अग्निपुत्रो महातेजाः केतुस्सर्वग्रहान्तकः ।
क्षोभयेद्यः प्रजास्सर्वाः स केतुः प्रीयतां मम ॥
ध्रुवराजो महापुण्य उदीच्यां दिशि यः स्थितः ।
ऋषीणां प्रवरः श्रेष्ठः स ध्रुवः प्रीयतां मम ॥
अगस्त्यः कलशोद्भूतो दक्षिणस्यां दिशि स्थितः ।

समुद्रं जीर्णवान्योऽसौ विन्ध्यारिः प्रीयतां मम ॥
अधोमुखस्थितो देवः पृथिव्यां सर्वव्यापकः ।
शम्भोश्च वल्लभो नित्यं स वास्तुः प्रीयतां मम ॥
हेरुकादीनि चान्यानि वटुकाश्चरकादयः ।
भूपातालखदिग्व्यापी क्षेत्रेशः प्रीयतां मम ॥
पृथिवीं द्यां चान्तरिक्षं समस्तभुवनानि च ।
अमरा येऽवतिष्ठन्ति प्रीयन्तां ते सदा मम ॥
भद्रा भगवती कृष्णा तारा काली च पार्वती ।
मङ्गला शिवरात्री च रात्रयो[1]ऽष्टौ प्रकीर्तिताः ॥
वसन्तश्च तथा ग्रीष्मो वर्षाश्चैव शरत्तथा ।
हेमन्तः शिशिरश्चैव प्रीयन्तां ते ममर्तवः ॥
[2]अग्न्यादित्यौ सर्वग्रहाधिपती वरुणचन्द्रमसौ नक्षत्राधिपती कुमारभौमौ विष्णुबुधौ इन्द्राबृहस्पती सरस्वतीशुक्रौ प्रजापतिशनैश्चरौ गणपतिराहू रुद्र-

१ प्रीयन्तां मम रात्रयः । २ वर्षाधिपती वा मासाधिपती वा दिवसाधिपती ॥ एवं चन्द्रादीनाम् ज्ञेयम् ॥

केतू ब्रह्मध्रुवौ अनन्तागस्त्यौ ब्रह्मा कूर्मः ध्रुवः अनन्तः हरिः लक्ष्मीः कमला शिक्ष्यादयः पञ्चचत्वारिंशद्वास्तोष्पतिदेवताः ॥ ब्रह्मयादयः मातरः गौर्यादयः मातरः ललितादयः मातरः दुर्गाक्षेत्रगणेश्वरदेवताः राकादेवताः त्रिकादेवताः सिनीवालीदेवताः कुहूदेवताः यामीदेवताः रौद्रीदेवताः ऐन्द्रीदेवताः वारुणीदेवताः बार्हस्पत्यदेवताः । ॐ भूर्देवताः ॐ भुवर्देवताः ॐ स्वर्देवताः ॐ भूर्भुवः स्वर्देवताः अखण्डब्रह्माण्ड(याग)देवताः धूः उपधूः महागायत्री सावित्री सरस्वती हेरुकादयो वटुकादयः । चत्वारो वेदाः साङ्गाः सायुधाः सवाहनाः सपरिवाराः सानुचराः यवतिलतण्डुलहोमेन प्रीयन्तां प्रीताः सन्तु ॥

ओ३म्

अथ विष्णुपञ्चके

## पुरुषसूक्तम् ॥

——:○:○❊○:○:——

### ओं नमो नारायणाय ॥

ओं ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः। कीयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्। लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ मेघश्यामं पीतकौशीयवस्त्रं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम्। पुण्योपीतं पुण्डरीकायताक्षं विष्णुं वन्दे सर्वलोकैकनाथम् ॥

आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
विश्वात्मा पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥
(सहस्रशीर्षा षोडश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तम् ॥)

पुरुषमेधः पुरुषस्य नारायणस्यार्षम् ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स-
भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्॥१॥ पुरुष
एवेदं सर्वं यद्भूतं यच्च भव्यम्[1] । उतामृतत्वस्येशा-
नो यदन्नेनाति रोहति ॥ २॥ एतावानस्य महिमातो
ज्यायाँश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपा-
दस्यामृतं दिवि ॥ ३॥ त्रिपादूर्ध्व उदैत्पुरुषः पा-
दोऽस्येहाभवत्पुनः । ततो विष्वङ्[2]व्यक्रामत्साशना-
नशने अभि ॥४॥ तस्माद्विराळजायत विराजो
अधि पूरुषः[3] । स जातो अत्यरिच्यत पश्चाद्भूमि-
मथो पुरः ॥५॥ यत्पुरुषेण हविषा देवा यज्ञमत-

१ भाव्यम् २ श्वङ्या ३ पुरुषः

न्वत। वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्ध-
विः ॥६॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥७॥ त-
स्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम्। पशूँस्ताँ-
श्चक्रे वायव्यानारण्यान्ग्राम्यां[1]श्च ये ॥८॥ तस्मा-
द्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि
जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥९॥ तस्मादश्वा
अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे
तस्मात्तस्माज्जाता अजावयः॥१०॥यत्पुरुषं व्यदधुः
कतिधा व्यकल्पयन्[2]। मुखङ्किमस्य कौ बाहू का ऊरू
पादा उच्[3]यते ॥११॥ ब्राह्मणोऽस्य मुखमासीद्बाहू
राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो
अजायत ॥१२॥ चन्द्रमा मनसो जातश्चक्षो[4]ः सूर्यो
अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत

---

१ म्याद् २ त् ३ च्ये ४ क्षुः

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकमकल्पयत्[२] ।१४॥
सप्तास्यासन्परिधयस्त्रिः[३] सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥१५॥ तेजोऽसि. ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥

॥ अथ बृहत्पुरुषसूक्तम् ॥

सहस्रशीर्षं दिव्यं तु विश्वाद्यं विश्वसम्भवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥

---

सहस्रशीर्षा षोडश नारायणः पौरुषमिति। शेषशायिन इत्यथर्वणस्य। पुरुषमेधः पुरुषस्य नारायणस्यैकोनाऽनुष्टुप् चतस्रोऽन्त्या वेदाह (धाता) यज्ञेन अद्भ्यास्त्रिष्टुप् ॥ प्रजापतिः चरति षड्ना वास्वदेवस्य। त्रिष्टुबाद्या (द्ये) द्वे पञ्चमी दशम्यन्त्याः। शेषमानुष्टुभम् ॥ सरिताङ्काश्यपीनां सरितो यज्ञकीर्तिमिश्छमानानां। हिरण्यगर्भेति (पञ्चोना) द्वादश त्रिष्टुप् महांत्या च। त्रियोदशी जगती। उपान्त्या गायत्री ॥

---

२ लोकाँ अकल्पयन् ३ त्रिसप्त

## पुरुषमेधः पुरुषस्य नारायणस्यार्षम् ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं
सर्वतः स्मृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥ पुरुष एवे-
दँ सर्वं यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो
यदन्नेनातिरोहति ॥२॥ एतावानस्य महिमातो ज्या-
याँश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्या-
मृतं दिवि ॥३॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहा-
भवत्पुनः । ततो भूमिं व्यक्रामत्साशनानशने अ-
भि ॥४॥ ततो विराळजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो अ-
स्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥६॥ तं यज्ञं
बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन देवा अयज-

१ ना

न्त साध्या ऋषयश्च ये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् । पशून्ताँश्चक्रिरे[1] वायव्याना-रण्यान्ग्राम्याश्च[✽] ये ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्त-स्मादजायत ॥ ९ ॥ तस्मादश्वा अजायन्त ये च के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अ-जावयः॥ १० ॥यत्पुरुषंव्यदधुः कतिधैनमकल्पयन् । मुखङ्किमस्यासीत्कौ बाहू का ऊरू पादा उच्यते । ११ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ १२ ॥ च-न्द्रमा मनसो जातश्चक्षुषोरधि सूर्यः । नसोर्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १३ ॥ नाभ्या आसीद-न्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ[2] अकल्पयन् ॥ १४ ॥ सप्तस्यासन्प-

---

१ पशूँस्ताँश्चक्रे २ लोकमकल्पयत् ✽ म्यान्

रिधयस्त्रिः सप्त समिधः कृताः देवा यद्यज्ञं तन्वा-
ना अबध्नन्पुरुषं पशुम् ॥१५॥ वेदाहमेतं पुरुषं
महान्तमादित्यवर्णं तमसः परस्तात् । सर्वाणि रू-
पाणि विभज्य धीरो नामानि कृत्वाभिवदन्यदा-
स्ते ॥१६॥ धाता पुरस्ताद्यमुदाजहार शक्रः प्रवि-
द्वान्प्रदिशश्चतस्त्रः । तमेव विदित्वाति[1] मृत्युमेति
नान्यः पन्था अयनाय विद्यते ॥१७॥ यज्ञेन यज्ञ-
मयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह
नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति
देवाः ॥१८॥ तेजोऽसि. ॥ अद्भ्यः सम्भृतः पृथिव्यै[3]
रसाद्विश्वकर्मणः समवर्तताधि[2] । तस्य त्वष्टा विदधद्रू-
पमेति तन्मर्त्यस्य देवमाजानमग्रे ॥ १९ ॥

॥ इति पूर्व नारायणम् ॥

---

१ विदित्व[illegible] २ [illegible] ३ [illegible]

॥ अथोत्तर नारायणम् ॥

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते। तस्य योनिं परिपश्यन्ति धीरास्तस्मिँस्तिष्ठन्ति भुवनानि विश्वा ॥१॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥२॥ यो देवेभ्य आतपति यो देवानां पुरोहितः। पूर्वो* यो देवेभ्यो जातो नमो रुचाय ब्राह्म्ये ॥३॥ रुचं ब्राह्म्यञ्जनयन्तो[1] देवा अग्रे यदब्रुवन्। यस्त्वैवं[4] ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥४॥ श्रीश्च ते लक्ष्मीश्च ते पत्न्या अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ [2]व्यात्तम्। इष्णं म इषाणामुं म इषाण सर्वलोकं म इषाण ॥५॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः। तदेव शुक्रं तद्ब्रह्म [3]तदापस्तत्प्रजा-

* पूर्वं १ यन्तु २ व्यात्तं (यातं) ३ ता आपः स प्रजापतिः ४ यस्त्वेवं

पतिः ॥६॥ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । कलाः काष्ठा मुहूर्ताश्चाहोरात्राणि सर्वशः ॥७॥ अर्धमासा मासा ऋतवः परिवत्सराः । स आपस्सुदुघे उभे इमे अन्तरिक्षमथो स्वः ॥८॥ नैनमूर्ध्वं न तिर्यञ्च न मध्ये परिजग्रभं[1] । न तस्येशे कश्च न यस्य नाम महद्यशः ॥९॥ न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्च नैनम् । हृदा मनीषा मनसाभिगुप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १० ॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्रिरजायत ततः समुद्रो अर्णवः ॥ ११ ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ १२ ॥ सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ १३ ॥ तेजोऽसि० ॥अद्भ्यः सम्भृतः पृथिव्या रसाद्विश्वकर्मणः समवर्तताधि ।

---

1 भत्

तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवमाजानमग्रे ॥ १३ ॥

सरिताङ्काश्यपीनां सरितो यज्ञकीर्तिमिच्छमानानाम् ।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥ यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव । ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै० ॥ २ ॥ य ओजोदा बलदा यस्य विश्व उपासते प्राशिषं यस्य देवाः । यस्यच्छायामृतं यस्य मृत्युः कस्मै० ॥ ३ ॥ येन द्यौरुग्रा पृथिवी दृढा येन स्वः स्तम्भितं येन नाकम्[1] । यो अन्तरिक्षं विममे वरीयः कस्मै० ॥ ४ ॥ य इमे द्यावापृथिवी तस्तभाने अधारयद्रोदसी[2] रेजमाने । यस्मिन्नाधि विततः सूर एति कस्मै० ॥ ५ ॥ यस्येमे विश्वे गिरयो

१ कः २ ध

महित्वा समुद्रं यस्य रसया सहाहुः[1]। दिशो यस्य प्रदिशः पञ्च देवीः कस्मै० ॥ ६ ॥ आपो ह यन्महतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम्। ततो देवानां निरवर्ततासुरेकः कस्मै० ॥ ७॥ तेजोऽसि०॥ आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः। संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ८ ॥

॥ अगस्त्यस्य च ॥

वेनस्तत्पश्यद्भुवनस्य विद्वान्यत्र विश्वं भवत्येकनीळम् । यस्मिन्निदं सं च वि चैति सर्वं स ओतः प्रोतश्च विभुः[2] प्रजासु ॥ १ ॥ प्र तद्वोचेदमृतं नु विद्वान्गन्धर्वो[3] नाम निहितं गुहा सत्। त्रीणि पदानि निहिता गुहासु यस्तानि वेद स पितुः पितासत् ॥ २ ॥ [4]सतो बन्धुर्जनिता स विधाता नामानि[5] वेद भुवना-

---

१ स आहुः २ भूः ३ धाम ४ स नो ५ धा

नि विश्वा । यत्र देवा अमृतमानशानास्तृतीये धाम[1]-न्नऽभ्यैरयन्त ॥ ३ ॥ परीत्य भूतानि परीत्य लोकान्परीत्य सर्वान्[2]प्रदिशो दिशश्च । प्रजापतिः प्रथमजा[3] ऋतस्यात्मनात्मानमुप[4] संविवेश ॥ ४ ॥ परि द्यावापृथिवी वितते सद्य इत्वा परि लोकान्परि दिशः परि स्वः । ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदासीत् ॥ ५ ॥ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥ ६ ॥ तेजोऽसि० ॥ यस्मादन्यो न परोऽस्ति जातो य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया सँविदानः त्रीणि ज्योतींषि सचते स षोडशी ॥ ७ ॥

॥ इत्युत्तरनारायणम् ॥

॥ बृहत्पुरुषसूक्तं समाप्तम् ॥

---

१ धामान्यभ्यै (धामनऽध्यै) २ सर्वाः ३ जां ४ माभि सेबभूव



শ্রীশ্রীলক্ষ্মী।

প্রকাশক—
শ্রীশশীভূষণ দাস।
৯নং কানাইধর লেন,
কলিকাতা।

Published by—
S. B. Dass.
9, Kanai Dhar Lane,
Calcutta.

B. P. M's Press

## अथ लक्ष्मीसूक्तम् ॥

श्री महालक्ष्म्यै नमः ॥

---

ओं पद्मद्वयवराभीष्ट-
युक्तपाणिचतुष्टयाम् ।
पद्मवर्णां भजे पद्म-
शायिनीं पद्मवासिनीम् ॥ ॥

पुस्तकाक्षाभयाब्जाढ्यां
सितवर्णां त्रिलोचनाम् ।
महापद्मनिषण्णां तां
लक्ष्मीं गजगतां नुमः ॥ ॥

ओं करयुगलगृहीतं पूर्णकुम्भं दधानां
क्वचिदमलगजस्थां शङ्खचक्राब्जपाणिम् ।
क्वचिदपि दयितांके चामरव्यग्रहस्तां

क्वचिदपि सृणिपाशौ बिभ्रतीं नौमि लक्ष्मीम् ॥ ॥

हिरण्यवर्णामेकोना श्रीर्भार्गवी[1] श्रीरलक्ष्मीघ्नं श्रैय्यमानुष्टुभं वै शक्कर्यन्तं हि साग्नेयी। चतुर्थी प्रस्तारपंक्तिः त्रिष्टुभौ पञ्चदश्युपरिष्ठाद्वृहती श्रीपुत्राः पं[2]रे षट् ॥

हिरण्यवर्णामिति पञ्चदशर्चस्य श्रीसूक्तस्य। आद्यायाः श्री ऋषिः। ततः चतुर्दशानामानन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः श्रीर्देवता (अग्निर्देवता) आद्यास्तिस्रोऽनुष्टुभः। चतुर्थीप्रस्तारपंक्तिः (वृहती) पञ्चमीषष्ठ्यौ त्रिष्टुभौ। सप्तम्यादयोऽष्टावनुष्टुभः। अन्त्या प्रस्तारपंक्तिः ॥ श्रीमहालक्ष्मी प्रीत्यर्थं पाठे (होमे) विनियोगः ॥

ॐ ॥ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजम्[3]। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १ ॥ ताम आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥ अश्वपूर्वां[4] रथमध्यां हस्तिनादप्रमोदिनीम्[5]। श्रियं देवीमुपह्वये श्रीर्मा देवी[6] जुषताम् ॥ ३ ॥ कां[*] सोस्मितां

१ गव्या २ परि ३ जां ४ पूर्णां ५ प्रबोधिनीं ६ देवीः ❀ कांस्यस्मितां

हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजु-
ष्टामुदाराम् । तां पद्मिनीमीं[1] शरणं प्रपद्ये अलक्ष्मीर्मे
नश्यतां त्वा वृणोमि ॥५॥ आदित्यवर्णे तपसोऽधि-
जातो वनस्पतिस्तव वृक्षोऽथबिल्वः । तस्य फलानि
तपसा नुदन्तु मायान्तरा याश्च बाह्या अलक्ष्मीः ।६॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भू-
तोऽस्मि राष्ट्रेऽस्मिन्कीर्तिं वृद्धिं[2] ददातु मे ॥७॥ क्षुत्पि-
पासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभू-
तिमसमृद्धिं च सर्वान्निर्णुद मे गृहात् ॥८॥ गन्धद्वा-
रां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभू-
तानां तामिहोपह्वये श्रियम् ॥९॥ मनसःकाममाकूतिं
वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि

---

१ पद्मनेमिं ॥ २ ऋ

श्रीः श्रयतां यशः ॥१०॥ कर्दमेन प्रजा भूता[1] मयि संभव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥ आपः स्रवन्तु[2] स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टीं[3] पिङ्गलां पद्ममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १३ ॥ आर्द्रां पुष्करिणीं यष्टीं[4] सुवर्णां हेममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १४ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्यो विन्देयं पुरुषानहम् ॥ १५ ॥ य आनन्दं समाविशदुपधावन्विभावसुम्[5] । श्रियः सर्वा उपासिष्व चिक्लीत वस मे गृहे ॥ १६ ॥ कर्दमेन प्रजाः सृष्टाः सम्भूतिं गमयामसि । अदधादुपगादेषाङ्गामान्स[6] सृ-

१ त्वा २ ज ३ पुष्टिं ४ यष्टिं ५ सुः ६ पागाद्येषा

ज्महे ॥ १७ ॥ जातवेदः पुनीहि मां रायस्पोषं च धारय । अग्निर्मां तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥ १८ ॥ तेजोऽसि० ॥ अच्छान्नमित्रमहो देवो देवानग्ने-[1]वोचः सुमतिं रोदस्योः । [2]वीहिं स्वस्तिं सुक्षितिं [3]दि-वोनॄन्द्विषो अंहांसि दुरितात[4]रेमतातरेम तवावसात-रेम ॥ १९ ॥ इति लक्ष्मीसूक्तम् ॥ अथ महालक्ष्मीसूक्तम् ( आयुष्यसूक्तम् )

आयुष्यं दश दाक्षायणायैकर्चाः सनकः सनातनः सनन्दनः सहसंज्ञस्समस्सुश्रीः सु[5]वाक्सर्वे हिरण्या-त्मस्तुतिः पञ्चम्यष्टमी नवम्यस्त्रिष्टुभः सप्तमी शा-क्वरी ( शेषमानुष्टुभम् ) ॥

आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यं वर्च[6]स्व जैत्रायाविशतादिमाम् ॥ १ ॥ उच्चैर्वाजी पृतनाषाट्सभासाहं धनं जयम् । सर्वाः समग्रा ऋ-द्धयो हिरण्येऽस्मिन्समाहिताः ॥ २ ॥ शुंनमहं

१ हि २ वीहि ३ देवो ४ तरि ५ वास्सर्वे ६ स्वजैत्रा ७ ग्र ८ शुनामहां ( शुनमहां )

हिरण्यस्व[1] पितुर्नामेव[2] जग्रभ। तेन[3] मां सूर्यत्वच-
मकरं पुरुषप्रियम्[4] ॥ ३ ॥ सम्राजञ्च विराजञ्चाभि-
ष्टिर्या च मे ध्रुवा। लक्ष्मी राष्ट्रस्य या मुखे तया
मामिन्द्र संसृज ॥ ४ ॥ अग्नेः प्रजातं परि यद्धिर-
ण्यममृतं जज्ञे[5] अधि मर्त्येषु। य एनद्वेद स इदे-[6]
नमर्हति जरामृत्युर्भवति यो बिभर्ति ॥ ५ ॥ यद्वेद
राजा वरुणो यदु देवी सरस्वती। इन्द्रो यद्वृत्रहा
वेद तन्मे वर्चस आयुषे ॥ ६ ॥ न तद्रक्षाँसि न
पिशाचाश्चरन्ति देवानामोजः प्रथमजँ ह्येतत्। यो
बिभर्ति दाक्षायणा हिरण्यं स देवेषु कृणुते दीर्घ-
मायुः स मानुष्येषु कृणुते दीर्घमायुः ॥ ७ ॥ यदाब-
ध्नं दाक्षायणा हिरण्यं शितानीकाय सुमनस्यमा-
नाः। तन्म[8] आबध्नामि शतशारदायायुष्माञ्जरदष्टि-
र्यथा सत् ॥ ८ ॥ घृताद्दुर्लुप्तं[9] मधुमत्सुपर्णं[10] धनञ्जयं

१ स्य २ र्मानेव ( मामेव ) ३ तेने ४ पूरुषु ५ यज्ञे ६ इदेनग ( इदेनद। इदं नगर्हति)
७ स्त ८ तन्न ९ दुर्लु[illegible] १० [illegible]

हिरण्यस्[1]व पितुर्[2]नामेव जग्रभ । तेन[3] मां सूर्यत्वच-
मकरं पुरुष[4]प्रियम् ॥ ३ ॥ सम्राजञ्च विराजञ्चाभि-
ष्टिर्या च मे ध्रुवा । लक्ष्मी राष्ट्रस्य या मुखे तया
मामिन्द्र संसृज ॥ ४ ॥ अग्नेः प्रजातं परि यद्धिर-
ण्यममृतं जज्ञे[5] अधि मर्त्येषु । य एनद्वेद स इदे[6]-
नमर्हति जरामृत्युर्भवति यो बिभर्ति ॥ ५ ॥ यद्वेद
राजा वरुणो यदु देवी सरस्वती । इन्द्रो यद्वृत्रहा
वेद तन्मे वर्चस आयुषे ॥ ६ ॥ न तद्रक्षाँसि न
पिशाचाश्च[7]रन्ति देवानामोजः प्रथमजँ ह्येतत् । यो
बिभर्ति दाक्षायणा हिरण्यं स देवेषु कृणुते दीर्घ-
मायुः स मानुष्येषु कृणुते दीर्घमायुः ॥ ७ ॥ यदाब-
ध्नं दाक्षायणा हिरण्यं शितानीकाय सुमनस्यमा-
नाः । तन्म[8] आबध्नामि शतशारदायायुष्माञ्जरदष्टि-
र्यथा सत् ॥ ८ ॥ घृतादुल्लु[9]प्तं मधुमत्सु[10]पर्णं धनञ्जयं

१ स्य २ मांनेव ( मामेव ) ३ तेने ४ पूरुषु ५ यज्ञे ६ इदेनग ( इदेनद । इदं नगर्हति )
७ स्त ८ तन्न ९ दुल्लूलु [illegible]

धरुणं धारयिष्णु । मृणात्सपत्नानधरांश्च कृणुदारोह मां महते सौभगाय ॥ ९ ॥ तेजोऽसि० ॥ प्रियं मां कुरु देवेषु प्रियं राजसु मां कुरु । प्रियं विश्वेषु गोप्त्रेषु मयि धेहि रुचारुचम् ॥ १० ॥ इत्यायुष्यसूक्तम् ॥

लक्ष्मी पद्मासनस्था विपुलकटितटा पद्मपत्रायताक्षी गंभीरावर्तनाभिस्तनभरनमिता शुक्लवस्त्रोत्तरीया। या सा दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भैः सा मे लक्ष्मी प्रहृष्टा निवसतु भवने पङ्कजव्यग्रहस्ता ॥ ॥ रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥ १ ॥ या हस्तिनि द्वीपिनि या हिरण्ये गोष्वश्वेषु पुरुषेष्वन्तः । इन्द्रं० ॥ २ ॥ सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं० ॥ ३ ॥ तेजोऽसि० ॥ या राजन्ये दुन्दु-

---

१ ऋणक् सपत्नादधरां ( पृणक् ) २ देहि

भावायतायामश्वस्य क्रन्दे पुरुषस्य मायौ इन्द्रं-या देवी० ॥ ४ ॥ इति महालक्ष्मीसूक्तम् ॥ ॥ ॥

अथ फलम् ॥ (तर्पणम्)

एकं मन्त्रं समाचक्ष्व सर्वकर्मकरं शिवम् । ऐहिकं सर्वधर्मज्ञ पारलौकिकमेव च ॥ पुष्करः ॥ प्रातिवेदं म-हाभाग यत्सूक्तं पौरुषं स्मृतम् । सर्वकर्मकरं ज्ञेयं पवित्रमघसूदनम् ॥ एकैकया ऋचा राम स्नातो द-त्वा जलाञ्जलीः । पौरुषेण तु सूक्तेन मुच्यते सर्व-किल्विषैः ॥ अन्तर्जलगतो जप्त्वा तथा सूक्तं तु पौरुषम् । सर्वकल्मषनिर्मुक्तो यथेष्टां लभते गति-म् ॥ एकैकया ऋचा स्नात्वा पुष्पं पुष्पं निवे दयेत् । पुरुषाय जले राम सर्वपापैर्विमुच्यते ॥ एकैकया ऋचा स्नातो लभेद्राम परं फलम् । स-र्वान्कामानवाप्नोति यान्कांश्चिन्मनसेच्छति ॥ पौरु

षेण तु सूक्तेन प्राणायामो महाफलः । जपं होमं तथा राम सर्वकल्मषनाशनम् ॥ सुरापो ब्रह्महा स्तेनः तथैव गुरुतल्पगः । पापेभ्यो विप्रमुच्यन्ते जप्त्वा सूक्तं तु पौरुषम् ॥ कृच्छ्रैर्विशोधितः पूर्वं मध्याह्ने सलिलोपगः । स्नात्वा तु पौरुषं सूक्तं जपेन्नित्यमतन्द्रितः ॥ संवत्सरेण देवेशं वासुदेवं प्रपश्यति । स्वयमेव महाभाग शाकमूलफलाशनः ॥ तस्मात्कामानवाप्नोति यद्राम मनसेच्छति । श्रियं प्रज्ञां तथा रूपं जीवितं दीर्घमेव च ॥ अणिमां लघिमां प्राप्तिं महिमां घरिमां तथा । ईशित्वं च वशित्वं च प्राकाम्यं च द्विजोत्तम ॥ यत्र कामावसायित्वं तस्मात्प्राप्नोति मानवः । दुरवापमथान्यद्वा यत्किञ्चिन्मनसेच्छति ॥ अकामः पौरुषं सूक्तं जप्त्वा नित्यमतन्द्रितः । तत्र याति महा-

१ धृतमतश्च यः कश्चित्

भाग यत्र विष्णोः परं पदम् ॥ एकं कर्म समाचक्ष्व देवलक्ष्मीविवर्धनम् । प्रतिवेदं जगन्नाथ यादोगण नृपात्मज ॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ पुष्करः ॥ श्रीसूक्तं प्रतिवेदं तु ज्ञेयं लक्ष्मीविवर्धनम् । इह लोके परे वापि यथाकामं द्विजोत्तम ॥ हिरण्यवर्णां हरिणीमृचः पञ्चदश द्विज । श्रीसूक्तं कथितं पुण्यं ऋग्वेदे पुष्टिवर्धनम् ॥ आयुष्यं चैव वर्चस्यं सूक्तं दाक्षायणं महत् । रथे अक्षेषु वाजेति चतस्रस्तु तथा ऋचः ॥ श्रीसूक्तं तु यजुर्वेदे कथितं सर्वकामदम् । श्रीसूक्तं यो जपेद्भक्त्या तस्याऽलक्ष्मीर्विनश्यति ॥ जुहुयाद्यश्च धर्मज्ञो हविष्येण[1] विशेषतः । श्रियं ददद्दिदं[2] चैव प्रोक्तमथर्वणे तथा ॥ श्रीसूक्तेन तु पद्मानां घृताक्तानां

---

१ हविष्याशी २ धातुमयीं देवीं

भृगूत्तम। अयुतं होमयेद्यस्तु वह्नौ भक्तियुतो नरः॥ पद्महस्तद्वया लक्ष्मीर्नरं तमुपतिष्ठति। दशायुतं च पद्मानां जुहुयाद्वा तथा जले॥ नापैति तत्कुलाल्लक्ष्मीर्विष्णोर्वक्षोगता यथा। घृताक्तानां तु बिल्वानां हुत्वा रामायुतं नरः॥ बहुवित्तमवाप्नोति यत्किञ्चिन्मनसेच्छति। बिल्वानां लक्षहोमेन कुलं लक्ष्मीमुपाश्नुते॥ पद्मानामथ बिल्वानां कोटिहोमं समाचरेत्। श्रद्धया परया भक्त्या देवेन्द्रत्वं लभेद्ध्रुवम्॥ त्रिसन्ध्यं प्रत्यहं कश्चिद्योजपेन्नियतव्रतः। हिरण्यपूर्णस्तेजस्वी धनाढ्यो भोगभाग्यवान्॥ जीवेच्चिरं शरीरान्ते चन्द्रसायुज्यमाप्नुयात्॥ मङ्गल्यमेतत्परमं पवित्रं संसारदुःखौघविनाशकारि। सुखप्रदं धर्मविदां नराणां मनोरथावाप्तिकरं प्रदिष्टम्॥ सम्पूज्य देवीं वरदां यथावत्पद्मैः सितैर्वा कुसुमैस्तथान्यैः।

क्षीरेण धूपैः परमान्नभक्ष्यैर्लक्ष्मीमवाप्नोति विधानतश्च ॥ भगवान्देवकीपुत्रः शङ्खचक्रगदाधरः । लक्ष्मीकान्तो महाबाहुः प्रीयतां मम केशवः ॥ अनेन मन्त्रपाठेन ( होमेन ) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं श्रीविष्णुपरमात्मदेवता सन्तोषणार्थं । भगवान्वासुदेवः । सङ्कर्षणः । प्रद्युम्नः । अनिरुद्धः । सत्यपुरुषः । अच्युतः । माधवः । गोविन्दः । अविकृतः । अनन्तः । अध्यक्षः । अचलः शान्तात्मा । यमनियमाश्रयः । परमर्द्धिप्रदः । लक्ष्मीनारायणः । सर्वलोकमयः । सर्वज्ञः । सर्वेश्वरः । न्यग्रोधशायी । सर्वव्यापी । त्रिविक्रमः । अपरिमितप्रभावः निर्लेपः । परमानन्दः । विश्वेश्वरः । मङ्गल्यरूपः । सूक्ष्मः । शेषशायीलक्ष्मीसहितोनारायणः । सपरिवारः । सानुचरः । प्रीयतां प्रीतोऽस्तु ॥ ॥ ॥

॥ इति विष्णुपञ्चकं समाप्तम् ॥

॥ ओ३म् ॥

## ॥ अथ रुद्रपञ्चके ॥

# ॥ रुद्रमन्त्राः ॥

ॐ नमो भगवते महारुद्राय ॥



ॐ देवं सुधाकलशसोमकरं त्रिनेत्रं
पद्मासनं च वरदाभयदं सुशुभ्रम् ।
शङ्खाभयाब्जवरभूषितया च देव्या
वामेऽङ्कितं शमनभङ्गहरं नमामि ॥

शुद्धस्फटिकसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥ नीलग्रीवं शशाङ्का-

ॐ नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरे-
ण्यमभयप्रदम् ॥ कमण्डलुदसूत्राभ्यामन्वितं शूल-
पाणि[1]कम् । ज्वलन्तं पिङ्गलजटाशिखं[2]मुद्द्योतका-
रिणम् ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् ।
दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् ॥ दि-
ग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं च शा-
श्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ सर्वव्यापिनमीशानं
रुद्रं वै विश्वरूपिणम् । एवं ध्यात्वा द्विजः सम्यक्त-
तो यजनमारभेत् ॥ मृत्युञ्जय महादेव पाहि मां
शरणागतम् । जन्ममृत्युजरारोगैः पीडितं भवबन्ध-
नैः ॥ इति विज्ञाप्य देवेशं जपेन्मन्त्रं च त्र्यम्बक-
म् ॥ त्र्यम्बकं यजामहे सुगन्धिं [3]पुष्टिवर्धनम् । उ-
र्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ आ
त्वावहन्तु हरयः सचेतसः [4]श्वेतैरश्वैरिह केतुमद्भि-

---

1 नम् २ खा ३ रयिपोषणम् ( शत्रुनाशनम् ) ४ श्वेतैरश्वैःसह

र्वाताजवेन बलमद्भिर्मनोजवायातु शीघ्रं मम रुद्राय हव्यन्देवानां च ऋषीनां चासुराणां च पूर्वजं सहस्राक्षं विरूपाक्षं विश्वरूपं महादेवं शिवमावाहयाम्यहम् ॥ आवाहयाम्यहं देवमीश्वरं पार्वतीपतिम् । वृषभासनमारूढं नागाभरणभूषितम् । प्रीयतां यजमानस्य तुष्टो भूयाज्जगत्पतिः । शुक्लवर्णो महातेजाः शुक्लस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव धूपोऽयं प्रतिगृह्यताम् ॥

ॐ [1]तत्पुरुषाय विद्महे । महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ३ ॥

शतरुद्रियन्देवानां रुद्रशमनं भवाय शर्वायश्च प्रत्युत्क्रान्तानुवाको देवर्षी रुद्रदैवत्यः त्रिष्टुप्छन्दश्चयने विनियोगः ॥ नमस्ते देवा रौद्रमानुष्टुभमाद्या गायत्री पञ्चमषष्ठ्यौ पङ्क्त्यन्त्या महापङ्क्ति-

---

१ षडाहुतयः

र्मा भैरेकपदा जगत्यनुष्टुप्त्रिष्टुब्महाबृहती यवमध्या रुद्रो देवता चरमेष्टिका अस्य रुद्रस्य प्रश्नस्य अनुष्टुप्छन्दः अघोरऋषिः सङ्कर्षणमूर्तिः सुरूपो योऽसावादित्यः परः पुरुषः स एव देवता अग्निक्रतुचरमायामिष्टिकायाँ शतरु[2]द्रपाठे ( होमे ) विनियोगः ॥

सकलस्य रुद्राध्यायस्य श्रीमहारुद्रो देवता एका गायत्री छन्दः तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः सप्तानुष्टुभो द्वे जगत्यौ परमेष्ठीऋषिः समस्तपापक्षयार्थे सकलकामना सिद्ध्यर्थे श्रीमहारुद्रदेवतासन्तोषणार्थे रुद्रमन्त्रपाठे ( होमे ) विनियोगः ॥

अथार्षम् ॥ रौद्रोध्यायः परमेष्टिन आर्षं देवानां वा प्रजापतेर्वा ॥ नमस्ते रुद्रमन्यवे इत्याद्योऽनुवाकः षोडशर्चः एकरुद्रदैवत्यः । प्रथमा गायत्री । तिस्रोऽनुष्टुभः । तिस्रः पङ्क्तयः । सप्तानुष्टुभः । द्वे जगत्यौ ॥ नमो हिरण्यबाहवे इति । इत उत्तरं सर्वाणि यजूंषि द्रापे अन्धसस्पते इति यावत् द्वयोर्द्वयोः रुद्रयोः स्तुतिः तिस्रोऽशीतयः ( तिस्रो नवतयः ) रुद्राणां च कण्डिकायां अष्टावष्टौ च रुद्रा अन्येऽन्यतरतो नमस्काराः । अन्ये रुद्राः ते शेरतराः तेषामुभयतो नमस्काराः ॥ अपरे जातसंज्ञका रुद्राः सभाभ्य इत्यादयः ॥ नमो वः किरिकेभ्य इत्यग्नि–वायु–सूर्य–हृदयभूताः पञ्चव्याहृतयो बहुरुद्रदैवत्याः ॥ द्रापे अन्धसस्पते इत्यनुवाके सप्तकण्डिका एक रुद्रस्तुतिः । आद्योपरिष्टाद्बृहती । द्वितीया जगती

---

१ एष रुद्रो २ रुद्रिय

तृतीयानुष्टुप् । द्वे त्रिष्टुभौ । द्वेऽनुष्टुभौ ॥ असङ्ख्याता इति दशमन्त्रा अनुष्टुभो बहुरुद्रदैवत्या अवतानसंज्ञकाः ॥ ततो नमस्तेऽस्तु रुद्रेभ्य इति त्रीणि यजूंषि बहुरुद्रदैवतानि प्रत्यवरोहसंज्ञका मन्त्राः ॥

आ त्वावहन्तु नमस्ते रुद्रमन्यवे इत्यादि तमेषां जम्बे दधामीत्यन्तं षडनुवाकाः । ईशानान्त्वेति तिस्रोऽनुषङ्गाः ॥ देवानामार्षं रुद्रशमनमानुष्टुभः प्रथमो गायत्री द्वयाद्याः पङ्क्तीः पञ्चमषष्टयौ महापङ्क्तिः । पञ्चदशशेषम् ॥

अथ मन्त्रा नमस्कारा यजूंषि त्रिष्टुभा यदा ( दयः ) । द्वात्रिंशच्च द्वितीयाः स्युः पञ्च षट्सप्त चापरे ॥ त्रिंशच्चतुर्थी सैकाद्याश्चत्वारिंशच्च पञ्चमी । नमस्काराश्च चत्वार आद्याः षष्टस्य कीर्तिताः ॥ अनुष्टुब्पञ्चमी ज्ञेया मा भैरेकपदा ततः । सप्तमी जगती ज्ञेया चानुष्टुबष्टमी तनूः ॥ परिणो नवमी त्रिष्टुप्शान्तिः सा पुत्रपौत्रयोः । दशमी महावृहती यवमध्येति तां विदुः ॥ द्वादशानुष्टुभश्चान्त्या यजूंषि च त्रिसङ्ख्यया । पञ्चविंशतिरेव स्युरनुवाके विभागदः ॥ इत्यार्षम् ॥

ध्यानम् कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा रमन्तं हृदयारबिन्दे भवं भवानीसहितं नमामि ॥

ध्याये नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

ओं नमः शिवाय वरदाय ॥ ओं नमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नमः । उतो त इषवे नमः ॥ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तन्वा शन्तमया गिरिशन्ताऽभिचाकशीहि ॥ यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मँ सुमना असत् ॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अँहींश्च सर्वाञ्जम्भयं सर्वाश्च यातुधान्योऽधराचीः परासुव ॥ असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमे रुद्रा अभितो दिक्षु श्रिताः । सहस्रशोऽवैषाँ हेळ ईमहे ॥ असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्रन्नुतैनमुदहार्यः ॥ उतैनं विश्वा भूतानि स दृष्टो मृळयाति

१ यत्र

नः ॥ नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये[1] अस्य सत्वानोऽहं तेभ्योऽकरं नमः ॥ प्र-
मुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् । याश्च ते हस्त
इषवः परा ता भगवो वप ॥ विज्यं धनुः कपर्दिनो
विशल्यो बाणवानुत ॥ ॥ अनेशन्नस्येषव आभुरस्य
निषङ्गथिः[2] ॥ या ते हेतिर्मीढुष्टम हस्ते बभूव ते ध-
नुः । तयाऽस्मान्विश्वतस्त्वमयक्ष्मेण परिभुज ॥ परि
ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य
इषुधिस्तवाऽरे अस्मन्निधेहि तम् ॥ नमांसित आयु-
धायाऽनातताय धृष्णवे । उभाभ्यामुत ते नमो बा-
हुभ्यां तव धन्वने ॥ अवतत्य धनुष्ट्वँ[3] सहस्राक्ष श-
तेषुधे । निशीर्य शल्यानाँ मुखँ शिवो नः सुमना भ-
व ॥ यात इषुः शिवतमा शिवं बभूव ते धनुः । शि-
वा शरव्या या तव तया नो मृळ जीवसे ॥११।१०१॥

---

१ य २ धिः ३ स्त्वँ

ऊँ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो । नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो । नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो । नमो बभ्लुशाय[1] व्याधिनेऽन्नानां पतये नमो । नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो । नमो भवस्य हेत्यै जगतां[2] पतये नमो । नमो रुद्रायाततायिने क्षेत्राणां पतये नमो । नमः सूतायाहन्त्याय[3] वनानां पतये नमो । नमो रोहिताय स्थपतये वृक्षाणां पतये नमो । नमो मन्त्रिणे वाणिजाय कक्षाणां[4] पतये नमो । नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो । नम आक्रन्दायत उच्चैर्घोषाय सत्वानां पतये नमो । नमः कृत्स्नं[5] वीताय धावते पत्तीनां पतये नमो । नमः सहमानाय निव्याधिन आव्याधिनीनां प-

---

१ शु २ तां ३ न्त्वा ४ क्ष्या ५ त्स्नं

तये नमो। नमो निषङ्गिणे ककुभाय स्तेनानां पतये
नमो। नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो।
नमो निचराय परिचरायारण्यानां पतये नमो ।
नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो।
नमः सृकायिभ्यो जिघाँसद्भ्यो मुष्णतां पतये नमो।
नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां पतये नमो।
नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये न-
मः ॥१२॥७७॥ नम इषुकृद्भ्यो धन्वकृद्भ्यश्च
वो नमो। नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो।
नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो ।
नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमो । नमो वि-
सृजद्भ्यो विध्यद्भ्यश्च वो नमो । नमः स्वपद्भ्यो
जाग्रद्भ्यश्च वो नमो । नमः शयानेभ्य आसीने-
भ्यश्च वो नमो । नमः तिष्ठद्भ्यो धावद्भ्यश्च वो-

१ वि

नमो । नमः सभाभ्यः सभापतिभ्यश्च वो नमो ।
नमोऽश्वेभ्योऽश्वपातिभ्यश्च वो नमो । नम आव्या-
धिनीभ्यो विविध्यद्भ्यश्च वो नमो । नम उगणाभ्यः
तृँहतीभ्यश्च वो नमो । नमो व्रातेभ्यो व्रातपतिभ्य-
श्च वो नमो । नमो गणेभ्यो गणपातिभ्यश्च वो नमो ।
नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमो । नमो
विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो । नमः सेनाभ्यः
सेना[1]नीभ्यश्च वो नमो । नमो रथिभ्यो [2]वैरूथिभ्यश्च
वो नमो । नमो महद्भ्योऽर्भकेभ्यश्च वो नमो ।
नमो युवाभ्य आशि[3]नेभ्यश्च वो नमो । नमः क्षत्तृ-
भ्यः संग्रहीतृभ्यश्च वो नमो । नमः तक्षभ्यो रथ-
कारेभ्यश्च वो नमो । नमः कुलालेभ्यः कर्मारेभ्य-
श्च वो नमो । नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो
नमो । नमः श्वनिभ्यो मृग[4]युभ्यश्च वो नमो ।

१ नि २ अरथेभ्यश्च ३ सि ४ गा

नमः श्वभ्यः श्वपातिभ्यश्च वो नमः ॥ ॥

नमो भवाय च रुद्राय च । नमः शर्वाय च पशुपतये च । नमो नीलग्रीवाय च शितिकण्ठाय च । नमो व्युप्तकेशाय च कपर्दिने च । नमः सहस्राक्षाय च शतधन्वने च ॥ १३ ॥ ७३ ॥

नमो गिरिशाय च शिपिविष्टाय च । नमो मीढुष्टमाय चेषुमते च । नमो ह्रस्वाय च वामनाय च । नमो बृहते च वर्षीयसे च । नमो वृद्धाय च सवृद्ध्वने च । नमोऽग्र्याय च प्रथमाय च । नम आशवे चाजिराय च । नमः शीभ्याय[1] च शीघ्र्याय[2] च । नम ऊर्म्याय चावस्वन्याय च । नमो नाद्याय च द्वीप्याय च । नमो ज्येष्ठाय च कनिष्ठाय च । नमः पूर्वजाय चापरजाय च । नमो मध्यमाय चा[3]प्रगल्भाय च । नमो बुध्न्याय च जघन्याय च ।

---

१ भ्या २ घ्रा ३ चापगल्भाय ( चाप्रगर्भाय )

नमः सोभ्याय च प्रतिसर्याय च। नम आशुषेणाय चाशुरथाय च ॥ ॥

नमो बिल्मिने च कवचिने च। नमो वर्म्मिणे च वरूथिने च नमः शूराय चावभेदिने च। नमः श्रुताय च श्रुतसेनाय च। नमो याम्याय च दुन्दुभ्याय च। नम उर्वर्याय च खल्याय च। नमः श्लोक्याय चावसान्याय च। नमः श्रवाय च प्रतिश्रवाय च। नमो वन्याय च कक्ष्याय च। नमो दुन्दुभ्याय चाहनन्याय च। नमो धृष्णवे च प्रमृशाय च। नमो निषङ्गिणे चेषुधिमते च। नमः तीक्ष्णेषवे चायुधिने च। नमः स्वायुधाय च सुधन्वने च ॥ १४ ॥ ७३ ॥

नमः सृत्याय च पथ्याय च। नमः काट्याय च नीप्याय च। नमो नाद्याय च वैशन्ताय च।

नमः कुल्याय च सरस्याय च । नमः कूप्याय चा-
वट्याय च । नमो वर्ष्याय चावर्ष्याय च । नमो
मेघ्याय च विद्युत्याय च । नमो वीध्र्याय चात-
प्याय च । नमो वात्याय च रेष्म्याय च । नमो
वास्तव्याय च वास्तुपाय च । नमः सोमाय च
रुद्राय च । नमः ताम्राय चारुणाय च । नमः शङ्गवे
च पशुपतये च । नम उग्राय च भीमाय च । नमो
हन्त्रे च हनीयसे च । नमोऽग्रेवधाय च दूरेवधाय
च । नमो वृक्षेभ्यो हरिकेशेभ्यः ॥ नमस्ताराय ।
नमः शंम्भवे च । मयोभवे च । नमः शङ्कराय च ।
मयस्कराय च ॥ ॥

नमः शिवाय च शिवतराय च । नमः किंशि-
लाय च क्षयणाय च । नम इरिण्याय च प्रपथ्याय
च । नमः पुलस्तिने च कपर्दिने च । नमो गो-

१ स २ ल्या

ष्ठ्याय च गृह्याय च। नमः तल्प्याय च गेह्याय च। नमः पार्याय चावार्याय च। नमः प्रतरणाय चोत्तरणाय च। नमस्तीर्थ्याय च कुं[1]ल्याय च। नमः फेन्याय च शष्प्याय च। नमः सिकत्याय च प्रवाह्याय च। नमो ह्रदव्याय च निवेष्प्याय च। नमः काट्याय च गह्वरेष्ठ्[2]याय च। नमः शुष्क्याय च हरित्याय च। नमो लोप्याय चोलप्याय च। नमः पाँसव्याय च रजस्याय च। नमः सूर्म्याय [3]चोर्म्याय च। नमः पर्ण्यर्[4]याय च पर्णशादाय च। नम आखिदते च प्रखिदते च। नमोऽभिघ्नते चापगुरमाणाय च। नम आखिदाय च विखिदाय च ॥ १५ ॥ ८८ ॥

नमो वः किरिकेभ्यो देवानाँ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो वि[5]क्षीणकेभ्यो नम आनिर्ह-

१ कू २ ष्ठा ३ च ऊर्म्याय ४ र्ण्या ५ क्षिणत्के

तेभ्यः द्रापे अन्धसस्पते दरिद्र नीललोहित आसां प्रजानामेषां पुरुषाणामेषां पशूनाम् । मा भैर्मा [1]रुङ्मा नः किञ्चनाममत् ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ या ते रुद्र शिवा तनूः शिवा विश्वाहे[2]भेषजी । शिवा रुतस्य भेषजी तया नो मृळ जीवसे ॥ परि नो[3] रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मते[4]रघायोः । अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥ मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधं निधाय कृत्तिं वसान उच्चर पिनाकम् । बिभ्रदुच्चर विकिरिळ[5] विलोहित नमस्ते अस्तु भगवः ॥ यास्ते सहस्रं हेतयोऽन्ये[6]स्मन्निवपन्तु ताः । सहस्रधा सहस्राणि

१ रो २ हा ३ णो ४ ति ५ ळू (द्र) ६ येऽस्मान्नि

हेतयस्तव बाह्वोः। तासामीशानो भगवः पराचीना मुखा कुरु॥

असङ्ख्याताः सहस्राणि ये रुद्रा अधि भूम्याम्। तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि॥ येऽस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि। तेषाँ स०॥ ये नीलग्रीवाः शितिकण्ठा दिवँ रुद्रा उपाश्रिताः। तेषाँ स०॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषाँ स०॥ ये वनेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषाँ स०॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषाँ स०॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः। तेषाँ स०॥ ये पथीनां पथिरक्षय ऐळमृदा[1] यव्युधः[2]। तेषाँ स०॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः। तेषाँ स०॥ य एतावन्तो वा भूयाँसो वा दिशो

१ ऐलबृदा (ऐलभृतः) २ युयुधः

रुद्रा वितष्ठिरे[1] । तेषाँ स० ॥ नमो अस्तु रुद्रे-
भ्यो ये दिवि येषां वर्षमिषवः तेभ्यो दश प्राचीर्द-
श दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । ते-
भ्यो नमो अस्तु ते नो मृळयन्तु ते यं द्विष्मो
यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥
नमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इष-
वः तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीची-
र्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नो
मृळयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां
जम्भे दधामि ॥
नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः
तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशो-
दीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नो मृळ-
यन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां ज-

१ स्थि

म्भे दधामि ॥ १४८ ॥

तेजोऽसि० ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु। यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ तर्पणम् मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां विधाय । भस्मच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥ नित्यं दण्डी नित्ययज्ञोपवीती नित्यं ध्याता[1] भस्मना कर्मबन्धी । रुद्रं दृष्ट्वा देवमीशानमुग्रं याति स्थानं तेन साकं तदीयम् ।

अनेन मन्त्रपाठेन ( होमेन ) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं । श्रीमहारुद्रदेवता सन्तोषणार्थं । भगवान् अघोरः तत्पुरुषः सद्योजातः वामदेवः असुरबलहः ईशानः बहुरूपः विश्वरूपः त्र्यम्बकः त्रिनेत्रः त्रिशूलहस्तः महामृत्युञ्जयभट्टारकः शतरुद्रेश्वरः वृषभवाहनः सानुचरः सपरिवारः भवो देवः ८ पार्वतीसहितः परमेश्वरः प्रीयेतां प्रीतोऽस्तु ॥

इति रुद्रमन्त्राः

समाप्ताः ॥

१ दाता

॥ ओ३म् ॥

॥ श्री महारुद्राय नमः ॥

# ॥ शताध्यायमन्त्राः ॥

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तस्स्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥
वन्दे रुद्रमुमापतिं सुरगुरुं वन्दे जगत्कारणं
वन्दे पन्नगभूषणं शशिधरं वन्दे पशूनां पतिम् ।
वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं
वन्दे शैलसुतामनोहरतरं वन्दे शिवं शङ्करम् ॥

इमा रुद्रैकादश वासिष्ठैकादश देवा भूर्भुवः स्वश्चक्षुषा रूपाणि [1]वेयमित्याङ्गिरसस्यैशाना (जगती त्रिष्टुबन्तम्) ॥

[2]इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे [3]मतीः । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः । सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥ त्वेषं वयँ रुद्रं [6]यज्ञसाधनमङ्कुं कविमवसे नि ह्वयामहे । आरे अस्मद्दैव्यँ हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥ दिवो वराहमरुषं कपर्दिनं त्वेषँ रूपं

१ वयमीशानस्त्यङ्गिरसः २ इमाँ ३ मतिम् ४ ळा ५ षो ६ यज्ञसाधंवङ्कुं ८ ष्टिर्वी

नमसा नि ह्वयामहे । हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म छर्दिरस्मभ्यं वि यँसत् ॥ इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् । रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ ॥ मृळ त्वमस्मभ्यँ रुद्रैतदस्तु हुतं तव । पशूनस्माकं मा हिंसीदेतदस्मादसद्धुतम् ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ उप ते स्तोमान्पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे । भद्रा हि ते सुमतिर्मृळयत्तमाथा वयमव इत्ते वृणी-

---

१ च्छ २ हिंसीरेतदस्मा असद्धुतम् ३ नमसा विधेमते ४ मथावयमव तच्चे

महे ॥ आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीरं सु-
म्नमस्मे ते अस्तु । मृळा च नो अधि च ब्रूहि
देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ अवोचाम
नमो अस्मा अवस्यवः शृणोतु नो हवँ रुद्रो
मरुत्वान् । तन्नो मित्रो वरुणो मामहन्तामदितिः
सिन्धुः पृथिवी उत द्यौः ॥ ११ । ६ ॥ अथ यजुः ॥

त्वमग्ने रुद्रो असुरो महो दिवस्त्वँ शर्धो मारुतं
पृक्ष ईशिषे । त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा
विधतः पासि नुँ त्मना ॥ देवा देवेषु श्रयन्ताम् ।
प्रथमा द्वितीयेषु श्रयन्तां । द्वितीयास्तृतीयेषु श्र०
तृतीयाश्चतुर्थेषु श्र० । चतुर्थाः पञ्चमेषु श्र० ।
पञ्चमाः षष्ठेषु श्र० । षष्ठाः सप्तमेषु श्र० । सप्त-
मा अष्टमेषु श्र० । अष्टमा नवमेषु श्र० । नवमा
दशमेषु श्र० । दशमा एकादशेषु श्रयन्ताम् ॥

१ पु २ धा ३ चमानवोमस्मा अवस्यवःश्रृण्वन्तु नो हव्यं रुद्र मुरुत्वा ४ प्रख्यायशसे ५ यंस्ते
६ दत्ता

(एकादशा द्वादशेषु श्र०। द्वादशास्त्रयोदशेषु श्र० त्रयोदशाश्चतुर्दशेषु श्र०। चतुर्दशाः पञ्चदशेषु श्र०। पञ्चदशाः षोडशेषु श्र०। षोडशाः सप्तदशेषु श्र०। सप्तदशा अष्टादशेषु श्र०। अष्टादशा एकोनविंशेषु श्र०। एकोनविंशा विंशेषु श्र०। विंशा एकविंशेषु श्र०। एकविंशा द्वाविंशेषु श्र०। द्वाविंशास्त्रयोविंशेषु श्र०। त्रयोविंशाश्चतुर्विंशेषु श्र०। चतुर्विंशाः पञ्चविंशेषु श्र०। पञ्चविंशाः षड्विंशेषु श्र०। षड्विंशाः सप्तविंशेषु श्र०। सप्तविंशा अष्टाविंशेषु श्र०। अष्टाविंशा एकोनत्रिंशेषु श्र०। एकोनत्रिंशास्त्रिंशेषु श्र०। त्रिंशा एकत्रिंशेषु श्र०। एकत्रिंशा द्वात्रिंशेषु श्र०। द्वात्रिंशास्त्रयस्त्रिंशेषु श्रयन्ताम्। )

देवास्त्रिरेकादशास्त्रयस्त्रिंशा उत्तरे भवथोत्तरसत्त्वान[1] उत्तरवत्मान[2] उत्तरलक्ष्माणो यङ्काम इदं[3]

---

१ २ नो ३ येदं

जुहोमि स मे कामः[18] समृद्ध्यतां वयं स्याम पतयो रयीणाम् ॥ ओं भूर्भुवस्स्वः स्वाहा ॥ [1]तुच्च शुक्चोष्णाचोग्रा च भीमा च राष्ट्रा च बीभत्सा च वैशन्ता च [2]शार्दूलाका चानिराका चामीवाचानाहुतिश्च [3]निर्ऋतिरेतास्ते [4]अग्नेवर्तिमती [5]स्तन्वस्ताभिस्तङ्गच्छ योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमर्पय ॥ ॥

भवा शर्वा मृळतमा[6]भियातं पशुपती भूतपती नमो वाम् । प्रतिहिताँमायतामाविस्रष्टं मा नो हिंसिष्ठं द्विपदो मा चतुष्पदः ॥ शुने क्रोष्ट्रे मा शरीराणि कर्तम[8]रि [9]क्रवेभ्यो गृध्रेभ्यो ये च कृष्णा अवर्ष्यवः । मक्षिकाः पशुप[11]ते [12]वयाँसि विघसे मा विदन्त ॥ क्रन्दाय ते प्राणाय ते [13]याश्च ते भव हेतयः । नमस्ते उग्र[14]कर्म ॥ सहस्रा[15]त्तं मर्त्यपुरस्तात्ते न[16]मः कूर्मोधरादुत्तरादनु । [17]अभिवर्गाद्दिवस्पर्यन्तरिक्षाय ते नमः ॥

---

१ तुक्च २ रा ३ निर्ऋतिश्च रेतास्ते ४ अग्नि ५ स्ता ६ वि ७ मयता ( मायतांमा) ८ मा ९ क्रवि १० [illegible] १५ चा १६ मा कु(कू) मोंधरागुत्तराधनुः १७ अभी १८ मा

[1]मुखानि ते पशुपते यानि चक्षूँषि ते नमः। त्वचे रूपाय सन्दृशे [2]प्रतीचीनाय ते नमः॥ अङ्गेभ्यस्त उदराय जिह्वायै दद्भयो गन्धाय घ्राणाय ते नमः। अहोरात्राणि विदधत्प्रतीचीनाय ते नमः॥ अस्त्रा नीलकपर्देन[3] सहस्राक्षेण वाजिना। शर्वेणाध्वगघोंतिना तेन मा समरामसि॥ भव ईशे द्विपदो भव ई[6]शे चतुष्पदः। भवो विश्वस्य भुवनस्य राजति॥ भवाय गावँ ओषधीरजीगुर्भवाय द्यावापृथिवी नमेते। स[8] नो रुद्रः[9] परिणो वृणक्तु हेत्याप इवाग्निः परिणो वृणक्तु॥ मा नोभि[10]र्मांस्त नमो अस्त्वस्मै चतुर्नमोष्टकृत्वो भवाय। दशकृत्वः पशुपते नमस्ते॥ योऽभियातोनिलयते त्वँ रुद्र निचिकीर्षति। यो नः पश्चादति प्रयु[11]ङ्क्ते तं विद्धयस्व पदवीरिव॥ नमः सायं नमः प्रातर्नमो रा[12]त्र्या नमो दिवा। भवाय च

---

१ मुखानीति पशुपति २ प्रतिचीराय ३ र्दिने ४ गा ५ ६ श ७ वा ८ मा ९ द्रा १० मँस्त
११ युक्ते च तं विद्यस्वपपदवीरिह १२ रात्र्यां

शर्वाय चोभाभ्यामकरं नमः ॥

अथ वायोरेकादश पुरुषस्यैकादश स्त्रीकस्य ॥

प्रभ्राजमानानाँ रुद्राणाँ स्थानेस्वंतेजसाभानि[1] । व्यवजातानाँ रुद्राणाँ स्था० । वासुकिवैद्युतानाँ रुद्राणाँ स्था० । रजतानाँ रुद्राणाँ स्था० । पुरु[2]-षाणाँ रुद्राणाँ स्था० । श्यामानाँ रुद्राणाँ स्था० । कपिलानाँ रुद्राणाँ स्था० । अतिलोहितानाँ रुद्राणाँ स्था० । ऊर्ध्वानाँ रुद्राणाँ स्था० । अवपत[3]-न्तानाँ रुद्राणाँ स्था० । वैद्युतानाँ रुद्राणाँ स्थानेस्वतेजसाभानि ॥

ॐ भूर्भुवस्स्वः रूपाणि वो मिथुनंमावोमिथुनं रीढ्वम्[4] ॥ प्रभ्राजमानानाँ रुद्राणीनाँ स्थानेस्वतेजसाभानि । व्यवजातानाँ रुद्राणीनाँ स्था० । वासुकिवैद्युतीनाँ रुद्राणीनाँ स्था० । रजतानाँ रुद्रा-

---

१ सुतेजसभानि २ परु ३ औपतं ४ ढुं

णीनाँ स्था० । पुं[1]रुषाणाँ रुद्राणीनां स्था० । श्यामानाँ रुद्राणीनाँ स्था० । कपिलानाँ रुद्राणीनाँ स्था० । अतिलोहितानाँ रुद्राणीनाँ स्था० । ऊर्ध्वानाँ रुद्राणीनाँ स्था० । [2]अवपतन्तीनाँ रुद्राणीनाँ स्था० । वैद्युतीनाँ रुद्राणीनाँ स्थानेस्वतेजसाभानि ॥

ॐ भूर्भुवस्स्वः स्त्रि[3]यो वो मिथुनं मावोमिथुनं रीढ्वम् ॥

( वयमग्ने इत्यस्य भूतानामार्षमीशो देवता ॥ )

वय[4]मग्ने धनवन्तः स्यां[5]मलं यज्ञायोत दक्षिणायै । ग्रावावदेदभि सोमस्याँशुमिन्द्रँ शि[6]क्षेमेन्दुनासुतेन ॥ रायस्पोषं नो धेहि जातवेद ऊर्जोभागं मधुमत्[7]सूनृतावत् । [8]दधाम यज्ञँ सुनवाम सोमं यज्ञेन त्वामुपशिक्षेम शक्र ॥ ईशानं त्वा शुश्रुमा वयं धनानां धनपते गोमदग्ने । अश्ववद्भूरिपुष्टँ हिरण्यव[9]दन्नवद्देहि मह्यम् ॥ दुहान्ते द्यौः पृथिवी पयोऽ-

१ परु २ औ ३ स्त्रियाः वै ४ या ५ स्यामालं यज्ञायत ६ सिक्षिमि ( शिक्षि )
७ त्स्यांघृतावत ८ ददान ९ द्धनवद्देहि

जगरस्त्वा सोदको विसर्पतु । प्रजापतिनात्मान-
माप्रीणोऽरिक्तो म आत्मा ॥ तेजोऽसि ॥ यो रुद्रो अग्नौ
यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो
विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु
देवाः ॥ ॥

मध्यं पीत्वा इति पूर्ववत्तर्पणम् ॥

---

इति
शताध्यायमन्त्राः
समाप्ताः ॥

---

१ जा

॥ ओ३म् ॥

॥ नमः शिवाय ॥

# * ॥ अथ चमकानुवाकाः ॥ *

शम्भुं शूलपिनाकसोमकलशभ्राजिष्णुहस्ताम्बुजं
देव्यालंकृतवामपार्श्वमुरगाधीशस्फुरत्कङ्कणम् ।
गङ्गागर्जितगर्भजूटममलं चन्द्रार्धमौलिं प्रभुं
कीनाशक्लेशनाशनिश्चितधियं भस्माङ्गरागं भजे ॥

कैलासाद्रिनिभं शशाङ्कशकलस्फूर्जज्जटामण्डलं
नासालोकनतत्परं त्रिनयनं वीरासनाध्यासिनम् ।
मुद्राटङ्ककुरङ्गजानुविलसत्पाणिं प्रसन्नाननं
कक्ष्याबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम् ॥

आशुः शिशान इति शुक्रज्योतिष्मानंशुप्रजननं सर्वाः प्रजाः काश्यप्या इति कश्यपस्य ॥ वाजस्य प्रसवोऽग्नेः ॥ क्रमध्वमिति त्रयोदशानुवाका देवानां । सभरस इति मरुतां वाजश्चम इति कारणानामृषीणां द्वादशानां[1] त्रयोदशानां चतुर्दशं च षष्ठी कश्यपस्य ॥

आशुरिति दशर्चं सूक्तं ऐन्द्रोऽप्रतिरथइन्द्रस्त्रिष्टुप् चतुर्थ्यां बृहस्पतिर्द्वादश्या अप्वान्त्याया इन्द्रो मरुतश्च वानुष्टुबित्यनुवाकेन प्रत्यृचमाज्यं जुहुयात्

आशुः शिशानो वृषभो न युध्मो[2] घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतँ सेना अजयत्साकमिन्द्रः ॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ स इषुहस्तैः स निषङ्गिभिर्वशी सँस्रष्टा सयुध इन्द्रो गणेन । संसृष्टजित्सोमपा बाहु-

---

१ द्वादशैतानि द्वादश त्रयोदशानां चतुर्दशष्षष्ठि कश्यपस्य । २ भीमो

[1]शंध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ बृहस्पते परि-
[2]दीया रथेन रक्षोहामित्राँ अपबाधमानः । प्रभ-
ञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता
रथानाम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वा-
न्वाजी सहमान उग्रः । अभिवीरो अभिषं[3]त्वा
[4]सहोजिज्जैत्रायनो रथमातिष्ठ गोवित् ॥

गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्मा[5] प्रमृ-
णन्तमोजसा । इमँ सजाता अनु वीरयध्वमिं[6]-
न्द्रसखायमनु संव्ययध्वम् ॥ अभि गोत्राणि
सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडयुध्योऽस्माकँ सेना अवतु
प्र युत्सु ॥ इन्द्र एँषां नेता बृहस्पतिर्दक्षिणो य-
ज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां
जयन्तीनां मरुतो [9]यन्तु मध्ये ॥ इन्द्रस्य वृष्णो

---

१ शर्ध्युग्रधन्वा २ धी ३ स ४ सहोजा जैत्रमिन्द्र ५ ज्म ६ मिन्द्रं सखायो अनु संरभध्वम्
७ आसां ८ दक्षिणा ९ यन्त्वग्रम् ॥

वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषुवस्ता जयन्तु । अस्माकं वीरा उत्तरे भव-[1]न्त्वस्माँ उ देवा अवता भरेष्वा ॥

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च [2]सत्यश्चर्तपाश्चात्यँहा ईदृङ्ङान्यादृङ् सदृङ् प्रतिसदृङ् मितश्च सम्मितश्च सभरा ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्त्ता च विधर्त्ता च विधारय ऋतजिच्च सत्याजिच्च से[3]नजिच्च सुषेणश्चान्तिमित्रश्च दूरे अमित्रश्च गण ईदृक्षास एतादृक्षास [4]ऊषुणः सदृक्षासः प्रतिसदृक्षास एतन मितासश्च सम्मितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्

१ न्त्वस्मानु देवा अवता हवेषु २ सत्यश्च तपश्च दृङ्हा (सत्यश्च ऋतपाश्चा०) ३ ना ४ ऊ ष णः

यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्नेवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्र[1]सृतिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रो[2]वश्च मे श्रुतिश्च मे ज्योतिश्च मे [3]स्वश्च मे प्राणश्च मे व्यानश्च मेऽपानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च मे ॥ आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽ[4]स्थीनि च मे परूँषि च मे शरीराणि च म आयुश्च मे जरा च मे ज्यैष्ठ्यञ्च म आधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे [5]वर्ष्मा च मे [6]द्राघ्मा च मे वृद्धञ्च मे वृद्धि-

---

१ सि २ श्र ३ सुवश्च ४ स्था ५ वर्षिमा ६ द्राघिमा ( द्राघुया )

श्च मे ॥ सत्यञ्च मे श्रद्धा च मे जगच्च मे धनञ्च
मे क्रीडा च मे मोदश्च मे वशश्च मे त्विषश्च मे
सूक्तञ्च मे सुकृतञ्च मे जातं च मे जनिष्यमाणं[1] च
मे वित्तञ्च मे वेद्यं[2] च मे भूतं च मे भविष्यच्च मे
सुगञ्च मे सुपथं[3]ञ्च मे ऋद्धञ्च मे ऋद्धिश्च मे क्लृ-
प्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ॥
शञ्च मे मयश्च मे प्रियञ्च मेऽनुकामश्च मे कामश्च
मे सौमनसश्च मे भगश्च मे द्रविणञ्च मे भद्रञ्च मे
श्रेयश्च मे वस्यश्च[4] मे यशश्च मे यन्ता च मे ध-
र्ता[5] च मे क्षेमश्च मे धृतिश्च मे संविच्च मे ज्ञात्रं-
ञ्च मे विश्वं च मे महश्च मे सूश्च मे प्रसूश्च मे
सीरं च मे लयश्च[6] मे ॥ ऋतञ्च मेऽमृतं च मेऽय-
क्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्व-
ञ्च मेऽनमित्रञ्च मेऽभयं च मे सुगं[7]ञ्च मे शयनं च मे

---

१ मानं २ विद्यं (विद्या) ३ थ्य ४ श्य ५ त ६ ला ७ खं

सूषा च[1] मे सुदिनं च मे ॥ ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च म औद्भिदं[2] च मे रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभु चं[3] मे प्रभु चं[3] मे पूर्णञ्च मे पूर्णतरं च मे कुयवञ्च मेऽक्षितिश्च मेऽन्नञ्च मेऽक्षुच्च मे ब्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे नीवाराश्च मे श्यामाँकाश्च मेऽणवश्च मे प्रियङ्गवश्च मे गोधूमाश्च मे मसूराश्च मे मुद्गाश्च मे खल्वाश्च मे ॥ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे सीसं च मे त्रपु चं[6] मे श्यामं च मे लोहितायसं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं[7] च मेऽकृष्टपच्यं[7]

---

१ श्च २ द्यं । ३ । श्च ४ त्तितिश्चमे (ऽत्तितञ्चमे) । ५ म ६ श्च ७ च्याः

च मे ग्राम्याश्च मे पशव आरण्याश्च मे वित्तं च मे
वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसति-
श्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इ-
त्या च मे गतिश्च मे ॥ ॥ अग्निश्च म इन्द्रश्च मे
सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे स-
रस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृ-
हस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे
वरुणश्च म इन्द्रश्च मे धाता च म इन्द्रश्च मे
त्वष्टा च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे वि
श्वेदेवाश्च म इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽ-
न्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे स-
माश्च म इन्द्रश्च मे नक्षत्राणि च म इन्द्रश्च मे
दिशश्च म इन्द्रश्च मे ॥ ॥ अँशुश्च मे रश्मिश्च मे-
ऽदाभ्यश्च मेऽधिपतिश्च म उपाँशुश्च मेऽन्तर्यामश्च

१ इ २ इतिश्च ३ विश्वे च मे देवा इन्द्रश्च मे

म ऐन्द्रावायवश्च मे मैत्रावरुणश्च म आश्विनश्च
मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म [1]आग्रा-
यणश्च मे क्षुल्लकवैश्वदेवश्च मे ध्रुवश्च मे वैश्वानर-
श्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे [2]मरुत्वतीयश्च मे
[3]माहेन्द्रश्च मे सावित्रश्च मे सारस्वतश्च मे [4]पात्नी-
वतश्च मे [5]हारियोजनश्च मे [6]स्रुचश्च मे चमसाँश्च
मे ॥ ॥ वायव्यानि च मे द्रोणकलशश्च मे [7]पूतभृच्च
मे ऽ[8]पूतभृच्च मे ग्रावाणश्च मे ऽधिषवणे च मे ऽवभृ-
थश्च मे स्वगाकारश्च मेऽग्निश्च मे घर्मश्च मे ऽर्कश्च मे
सूर्यश्च मे प्राणश्च मे ऽश्वमेधश्च मे पृथिवी च मे दि-
तिश्च मे ऽदितिश्च मे द्यौश्च मे शक्करीरङ्गुलयो दि-
शश्च मे यज्ञेन कल्पन्तां ब्रतञ्चर्तुश्च संवत्सरश्च त-
पश्चाहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन क-
ल्पेताम् ॥ त्रियविश्च मे त्रियवी च मे दित्यवाट् च

---

१ आग्रयण [आग्रायण] २ मारुत्वतीयाः ३ महेन्द्रीयश्च मे ४ पत्नी ५ हरि ६ स्रवश्च मे ७ स
८ भू ९ ऽभू

मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाट् च मे पष्ठौही च मे उक्षा च मे वशा च मे ऽनुड्वाँश्च मे धेनुश्च मे वृ[2]षभश्च मे वेहश्च म एका च मे तिस्रश्च मे तिस्रश्च मे त्रियस्त्रिंशच्च मे चतस्रश्च मे ऽष्टौ च मे ऽष्टौ च मे ऽष्टाचत्वारिंशच्च मे ॥

वाजश्च प्रसवश्चापिजश्च क्रतुश्च वाक्पतिश्च वसुश्च स्वर्मौर्ध्नो मूर्धा वै यशनो व्यश्वाँ आन्त्योन्त्यो भौवनो भुवनस्य पतिः प्रजापतिरधिपतिरियन्ते राण्मित्रो यन्तासि यमन ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायायुर्यज्ञेन कल्पतां मनो यज्ञेन कल्प० प्राणो यज्ञेन कल्प० चक्षुर्यज्ञेनक० श्रोत्रंयज्ञेनक० वाग्यज्ञेन० आत्मा यज्ञेन० ब्रह्मा यज्ञेन० पृष्ठं यज्ञेन० यज्ञो यज्ञेन कल्पतां ऋक्च साम च

१ अ २ ऋष

स्तोमश्च यजुश्च बृहच्च रथन्तरञ्च स्वर्देवा अगन्म प्रजापतेः प्रजा अभूवन्नमृता अभूम वेट्स्वाहा ॥

वाजस्य नु प्रसव इति षट् ॥

विश्वे अद्य मरुतो विश्व ऊती वि[1]श्वे भवन्त्वग्नयः समिद्धाः । विश्वे मा[3] देवा अवसागमन्निह विश्वमस्तु द्रविणं वाजे[2] अस्मिन् ॥ आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत् ॥ वाजो मा[3] सप्त प्रदिशश्चतस्रो वा परावतः । वाजो मा[3] विश्वैर्देवैर्धनसाता इहावतु ॥ वाजो मे अद्य प्रसुवाति दानं वाजो देवान्हविषा वर्धयाति । वाजस्य

१ विं २ वाजो अस्मे ३ नो

हि प्रसवेनन्नमेति विश्वा आशा वाजपतिर्जयेयम् ॥ वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति । वाजस्य हि प्रसवेनन्नमेति सर्वा आशा वाजपतिर्भवेयम् ॥ सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्याद्भिरोषधीभिः । सोऽहं वाजँ सनोम्यं[1]ग्ने ॥ तेजोऽसि ॥ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ ॥

इति

यजुर्वेदे चमषट्कम्

समाप्तम् ॥

---

१ स्यग्नेः

॥ ओ३म् ॥

## ॥ नमः शिवाय ॥

# * ॥ अथ सौमारुद्रमन्त्राः ॥ *

### * ॥ पञ्चचूडास्थानकम् ॥ *

बालार्कायुततेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलं
नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालं करैः ।
खट्वाङ्गं दधतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं
व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥

उद्यत्सूर्यसहस्रभास्वरमुखं कर्पूरकुन्दप्रभं
पिङ्गारक्तजटातटं फणिफणालङ्कारहारोज्ज्वलम् ।
स्मितास्यं शशिखण्डमौलिमभयं खड्गं कपालं वरं
शूलं चापवरं दधानमनिशं दोर्भिर्भजेऽहं शिवम् ॥

सौमारुद्रमि[1]ती[2]श्वरो भ्रातृव्यः ब्राह्मणानि [3]सुमन्तोः क-
श्यपस्य [4]ब्रह्मणश्च रौद्रस्याङ्गिरसस्य देवानामार्षम् ॥
सौमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणां श्वेता-
याः श्वेतवत्साया आज्यं मथितँ स्यात्तस्मिन्ब्रह्मवर्च-
सकामः स्वर्भानुर्वा आसुरः सूर्यन्तमसा विध्यत्स
न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छँस्तमेतये-
ष्ट्या याजयँस्तयास्मात्तमोपाघ्नँस्तमसैष प्रावृतो यो-
ऽलं ब्रह्मवर्चसा [5]यः सन्न ब्रह्मवर्चसी भवति तमएवा-
स्मादपहन्ति ब्रह्मवर्चसेनैनँ संसृजति श्वेतायाः श्वे-
तवत्साया आज्यं भवति शुक्ला व्रीहय एवमिव वै
ब्रह्मवर्चसं ब्रह्मवर्चसमेव सन्दधाति ॥ घृतेन प्रो-
क्षन्ति घृतेन मार्जयन्ते शान्त्यै शान्तिर्ह्यापोप्यस्य ताँ
रात्रीमपोगृहान्नावहरेयुः परिश्रिते यजेत ब्रह्मवर्चस-
स्य परिगृहीत्यै प्रादेशमात्रश्चरुरूर्ध्वो भवत्येवं तिर्य-

१ सो २ ति शिरो ३ समन्तु ४ ब्राह्मणस्य च ५ य

ड्ङेतावान्वै पुरुषो यावदस्य प्राणाँ अभि यावाने-
वास्यात्मा तस्मात्तमोपहन्ति साकं रश्मिभिः प्रचर-
न्त्यसा एवास्मादादित्य उद्यँस्तमोपहान्ति तिष्या पूर्ण-
मासे यजेत तिष्यो[1]वै रुद्रश्चन्द्रमाः सोमः सौमीरतः
प्राचीनमोषधयो रौद्रीः प्रतीचीनमोषधयो रौद्रीः प्र-
तीचीनं पुष्यन्ति प्राचीनँ शुष्यन्ति प्रतीचीनं प्रत्यक्त-
मेवैना [2]ऋध्नोतीश्वरो दुश्चर्मा भवितोर्य एतया यजे[3]ते-
तीवह्यस्मादपहन्ति मनो ऋचस्सामिधीनीष्वप्यनुब्रू-
यान्मनुर्वै यत्किञ्चावदत्तद्भेषजमासीद्भेषजमेवास्मै क-
रोत्युपक्षरन्ति सिन्धवो मयोभुव इति नराशँस्या परि-
ददाति शान्त्यै षट्पदा [4]भवन्ति षड्वा ऋतव ऋतुष्वेव
प्रतितिष्ठति ॥ ईश्वरस्तु तदतिदुश्चर्मैव भवितोस्ते-
जाँसि ह्येष प्रत्यारोहन्नि[5]ति सौमा पौष्णं चरुं पशु-
कामोनु निर्व[6]पेत्सोमो वै ब्राह्मणस्य स्वा देवता पश-

१ वो २ ऋध्नुवती ३ जे ४ भवति ५ न्नेति सोमा ६ वंपे सो ७ स्वं

वः पूषा स्वामेव देवतां पशुभिर्बृंहयते त्वचमेव कु-
रुते सौमारौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिच-
रन्[1]त्सौम्यो वा आसां प्रजानामधिपती रुद्रोऽग्निरधि-
पतिर्वध्यस्य चावध्यस्य चेशोऽधिपतिमेवैनं निर्याश्[2]य
रुद्रायापि दधाति कृष्णानां व्रीहीणां भवति कृ-
ष्णमिव वै तमस्तमो मृत्युर्मृ[3]त्युनैवैनं[4]ग्राहयति श-
रमयं बर्हिः[5]शीर्त्यै वैभीतक इध्मो वि[6]भीत्यै सौमा-
रौद्रं चरुं निर्वपेत् ॥ ॥

भ्रातृव्यतायै वा द्वितीयतायै वा तस्यार्धमर्धं
सर्वं स्यादर्धं शुक्लानां व्रीहीणाँ स्यादर्धं कृष्णानाम-
र्धं शरमयं बर्हिषोऽर्धं दर्भमयमर्धं वैभीतकमिध्म-
स्यार्धमन्यस्य वृक्षस्य सोमो वै ब्राह्मणस्य स्वा दे-
वता स्वायामेवास्मै देवतायां द्वितीयं जनयति य-
दर्धमर्धं द्वितीयत्वायै वैतत्सौमारौद्रं चरुं निर्वपेत्प-

१ न्सोमो २ स्य ३ त्युर्नै ४ ग्र ५ श्शीर्त्यै ६ विभित्यै ७ व त

यस्यामयाविनः सौम्यो वै जीवन्नाग्नेयः प्र[1]मीतो नैष जीवो न मृतो य आमयावी तयोरेवैनं भागधेयेन निष्क्रीणाति ॥ पयसि भवति पयो वै पयः पयः पुरुषः पय एतस्यामयति यस्यामयति पयसैवास्य पयः स्पृणोति ग्रसितं वा एष एतँ सोमारुद्रयोर्निष्खिदति यो होता भवति स ईश्वरः सौमारौद्रं चरुं निर्वपेत्प्रजाकामो वा पशुकामो वा सोमो वै रेतोधा रुद्रोऽग्निः सप्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजनयति विन्दते प्रजां वा पशून्वा यतरस्मै कामाय निर्वपति ॥ ५ ॥ १६५ ॥

[2]सौमारुद्रचतुष्कं भरद्वाजः सौमारुद्रौ त्रिष्टुप् ॥

[2]सौमारुद्रा धारयेथामसुर्यं प्रवामिष्टयोऽरमश्नुवन्तु । दमेदमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥ १ ॥ [2]सौमारुद्रा वि वृहतं विषूचीममीवा या

---

१ प्रमितो ( प्रमेतो ) २ सो

* प्रमेतोऽनड्वाँहं तस्मै दद्यात्सँ इन्धानस्याश्नीयात्सैव तत्र प्रायश्चित्तिः

नो गयमाविवेश । आरे बाधेथां निर्ऋतिं पराचैर-
स्मे भद्रा सौश्रवसानि सन्तु ॥ २ ॥ सौमारुद्रा युव-
मेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् । अव स्य-
तं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्
॥ ३ ॥ तेजोऽसि ॥ तिग्मायुधौ तिग्महेती सुशेवौ सौमा-
रुद्राविह सु मृळतं नः । प्र नो मुञ्चतं वरुणस्य पा-
शाद्गोपायतं नः सुमनस्यमाना ॥ ४ ॥

इति ऋग्यजुर्वेदे
॥ सौमारौद्रमन्त्राः समाप्ताः ॥

॥ ओ३म् ॥

॥ नमः शिवाय ॥

अथ

# * ॥ दीक्षानाम रुद्रब्राह्मणम् ॥ *

दक्षाङ्कस्थं गणपतिमुखं प्रामृशन्दक्षदोष्णा
वामोरुस्थानगपतनयाङ्के गुहं चापरेण ।
इष्टाभीती परकरयुगे धारयन्निन्दुकान्ति-
रव्यादस्मांस्त्रिभुवननतो नीलकण्ठस्त्रिनेत्रः ॥

अर्धं यस्य भुजे भुजङ्गवलयमर्धं सुवर्णाङ्गद-
मर्धं कज्जलचित्रितं सुनयनमर्धं च भूत्या सितम् ।
अर्धं दिग्वसनं तथातिरमणमर्धं च नानाम्बरं
सोऽव्यात्षोडशनेमिमूर्तिसहितो मामर्धनारीश्वरः ॥

दीक्षया[1] त्वा परिमित्रेति पञ्चैते[2] प्राजापत्यस्य येन देवाज्योतिष्येति संवर्तस्याङ्गिरसस्य[3] यावद्ब्राह्मणा यजुरित्यार्षम् ॥

दीक्षया विराळाप्तव्या तिस्रो रात्रीर्दीक्षितः स्यात्रिपदा विराड्विराजमेवाप्नोति। षड्रात्रीर्दीक्षितः स्यात्षड्वा ऋतवः संवत्सरः संवत्सरो विराड्विरा०। दश रात्रीर्दीक्षितः स्याद्दशाक्षरा विराड्विरा०। द्वादश रात्रीर्दीक्षितः स्याद्द्वादश मासाः संवत्सरः संवत्सरो विराड्विरा०। त्रयोदश रात्रीर्दीक्षितः स्यात्त्रयोदश मासाः संवत्सरः संवत्सरो विराड्विरा०। पञ्चदश रात्रीर्दीक्षितः स्यात्पञ्चदशार्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरो वि०। सप्तदश रात्रीर्दीक्षितः स्याद्द्वादश मासाः पञ्चर्तवः ससंवत्सरः[4] संवत्सरो वि०। चतुर्विंशति[5] रात्रीर्दीक्षितः स्याच्चतुर्विंश-

---

१ दीक्षात्वापामैत्रेत्वे(पमित्यत्रेः)(परिमित्रिः)परमितित्रिः) २ पञ्चान्ये ३ संवत्सरस्या ४ सः(षः) ५ शतिं

तिस्संवत्सरस्यार्धमासा अर्धमासशः संवत्सर आ-
प्यते संवत्सरो वि० । त्रिंशतँ रात्रीर्दीक्षितः स्यात्त्रिं-
शदक्षरा विराड्विराजमेवाप्नोति ॥ ॥

मासं दीक्षितः स्याद्यो वै मासः संवत्सरः संव-
त्सरो विराड्विराजमेवाप्नोति । चतुरो मासो दीक्षितः
स्याच्चतुरो वा एतं मासो वसवोऽबिभरुस्ते पृथिवीमा-
जयन्गायत्रीं छन्दोऽष्टौ रुद्रास्तेन्तरिक्षमाजयँस्त्रिष्टु-
भं छन्दो द्वादशादित्यास्ते दिवमाजयञ्जगतींछन्दस्त-
तो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानां तस्माद्द्वा-
दशमासो भृ[1]त्वाग्निं चिन्वीत[2] द्वादशमासाः संवत्सरः
संवत्सरोऽग्निर्वैश्वानरस्तस्याहोरात्राणीष्टका आप्तेष्ट-
कमेवैनं चिन्वते ऋध्नोति व्यावृतमेव गच्छति श्रै-
ष्ठ्यँ समानानां गायत्रं पुरस्ताद्गायति शिरो वै देवा-
नां गायत्रं गायत्रोऽग्निस्तस्माद्गायत्रं पुरस्ताद्गायति ॥

---

१ भू २ ते

अग्निपावमान्यामयं [1]वावयः [2]पवते सप्राणो मुखन्दे-
वानामग्निर्मुखत एव प्राणन्दधाति तस्मान्मुखतः प्रा-
णो रथन्तरमुत्तराद्गायति बृहद्दक्षिणतः [3]पक्ष एवास्यो-
पदधातीयं वै रथन्तरमसौ बृहदाभ्यामेवैनं परिगृ-
ह्णाति यज्ञा यज्ञीयं [4]पुच्छे गायति श्रो[5]ण्यं वामदेव्य-
मात्मा वै यज्ञा यज्ञीयन्तनूर्वामदेव्यमात्मानमेवैनँ
स[6]तनूँश्चिनुते हृदयमपि कक्ष्ये तस्मादपि कक्षे हृद-
यमनृचम्भवति तस्मादन[7]स्थँकँ हृदयमर्क्यैः परिगा-
यत्यर्को वा अग्निरर्कमेवार्क्यैः परिगायति शान्त्यै ॥
संवत्सरो वा [8]अन्तरतमः स्वर्गं लोकं ज्योतिष्मती-
रेतास्साहस्रीरिष्टका याद्धिरण्यशल्कैः प्रोक्षति ज्यो-
तिषैवास्मै संवत्सरं विवासयति सहस्रस्य प्रमासि
सहस्रस्य प्रतिमासीति सहस्र[9]सम्मिता हीमे लोका
अग्निं वा एतदग्नेर्यदस्यात्र न क्रियते यन्न चीयते-

१ वायवः २ पावते ३ पक्षा ४ पुच्छ ५ ण्यां ६ नु ७ स्त ८ अन्तरातमः ९ स्रस्य स

ऽमृतं हिरण्यं यद्धिरण्यशल्कैः प्रोक्षत्यमृतेनैवास्य तन्वम्पृण[1]क्तीमा मे अग्न इष्टका धेनवस्सन्त्विति धेनुरेवैना[2]ः कुरुते ता एनं कामदुघा अमुष्मिल्लोक उपतिष्ठन्ते रुद्रं वै देवा [3]यज्ञान्निरभजन्त्स देवानायतयाभिपर्यावर्तत ते देवा एतच्छतरुद्रियमपश्यँस्तेनैनमशमयन्यच्छतरुद्रियं जुहोति तेनैवैनँ शमयति ॥ ॥

जानुदघ्नेऽग्रे जुहोत्यस्या एव रुद्रमवयजतेऽथ नाभिदघ्नेऽन्तरिक्षादेव रुद्रमवयजतेऽथ पुरुषमात्रेऽमुष्या एव रुद्रमवयजत इत एवोर्ध्वं रुद्रमवयजतेऽथ पुरुषमात्रेऽथ नाभिदघ्नेऽथ जानुदघ्नेऽमुत एवार्वाञ्चँ रुद्रमवयजते तत्षट्संपद्यते षड्वा ऋतुभ्यँ[4] एव रुद्रान्निरवयजते गवीधुका सक्तुभिर्वा जर्तिलैर्वा कुसयसर्पिषा वा मृगक्षीरेण वा जुहोति यद्ग्राम्येण जुहुयाद्ग्राम्यावचारिणँ रुद्रं कुर्यादारण्येनैवारण्यमभिरुद्र-

---

१ णन्ती (ण्यन्ती) २ नां कु ३ यज्ञान्नि ४ भिरे

न्निरवयजते ॥ ॥

अर्कपर्णेन जुहोत्यर्को वा अग्निरर्केणैवैनमर्कादधि निरवयजत उत्तरस्य पक्षस्य या चरमेष्टका तस्याञ्जुहोत्येषा वै रुद्रस्य दिक्स्वायामेव दिशि रुद्रं प्रति[1]गृह्यावयजते पशुर्वा अग्निरेतर्हि वा एष जायते यर्हि चीयते यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति स यजमानं चैवाध्वर्युञ्च ध्यायति यच्छतरुद्रियं जुहोति भागधेयेनैवैनँ शमयति ॥

अङ्गिरसो वै स्वर्गंल्लोकं यन्तस्तेजायां घर्मं प्रासिञ्चत्सा शोचन्ती पर्णं परामृशत्सोऽर्कोऽभवत्तदर्कस्यार्कत्वं यदर्कपर्णेन जुहोति सयोनित्वाय यन्द्विष्यात्तस्य सञ्चरे पशूनां[2] न्यस्येद्यः प्रथमः पशुराक्रामति त आर्तिमार्छन्ति या उत्तमास्ता यजमानं वाचयेदेता वै देवतास्स्वर्ग्यास्ताभिरेवं[3] स्वर्गंल्लोकमेत्ये-

---

१ प्रतिहृत्याव २ नान्य ३ व

ता वै देवता अभिचरणीया यं द्विष्यात्तं ब्रूयादमुं वो जम्भे दधामीत्येताभ्य एवैनं देवताभ्य आवृश्चति ताजक्प्रधन्वति ॥ तेजोऽसि ॥ यो रुद्रो अग्नौ० ॥

॥ इति दीक्षा समाप्ता ॥

अथ फलम् (तर्पणम्)

कूष्माण्डाः पावमानीश्च गायत्रीं शिरसा सह । रुद्रांश्च ये जपिष्यन्ति तथैव चाघमर्षणम् ॥ भस्मीभवति पापौघः सलिलं सागरे यथा । सर्वयज्ञान्परित्यज्य जपयज्ञे व्यवस्थितः ॥ आराधयति यो रुद्रं वाञ्छयं देवमीश्वरम् । तं समाप्नोति वै जापी तस्माच्छ्रेष्ठा हि जापिनः ॥ न तत्र मन्त्रिणो यान्ति न यज्ञैर्द्विजसत्तमाः । सूर्यमप्यधिगच्छन्ति ह्यधीत्य च परं पदम् ॥ विरजं विमलं शुद्धं त्रिमधुज्येष्टसामगम् । त्रिसुपर्णं सुपर्णं च पञ्चाग्निं शिवसम्भवम् ॥ अथर्वशिरसं भौमं वामदेवं तथैव च । दुर्गां च शिवसङ्कल्पं शुद्धवत्यतरत्समाः ॥ यश्च वेदांश्च विद्याश्च ह्यन्तर्भावमकल्प-

१ तं वै संगृह्यते जापी २ शुद्धवती तरत्समिः (शुद्धवति तरत्समाः)

यत् । ब्रह्महा यदि वा चौरः सुरा¹पो गुरुतल्पगः ॥ रुद्रं च प्रजपेद्यस्तु सर्वपापैः प्रमुच्यते । यस्य वै यजमानस्य भुंक्ते हि रुद्रजापकः । यजमानं च पंक्तिं च नौरिवाम्भसि तारयेत् ॥ भुंजतो रुद्रजापस्य यदन्नं पतितं क्षितौ । तेनास्य निर्जिता लोकाः प्रेत्य चेहच शाश्वताः ॥ यश्चेमां पृथिवीं दद्यात्सवरत्नैरलंकृताम् । रुद्रजापी तु रुद्रैश्च तुल्यो भवति मानवः ॥ यस्तु कोटिशतं दद्यात्कपिलानां गवां नरः । नित्यजापी तु रुद्रैश्च तुल्यो भवति मानवः ॥ सर्वार्थांस्तु परित्यज्य रुद्रोपासी सदा भवेत् । स शुद्धस्सर्वपापेभ्य उद्धरेत्सप्तमं कुलम् ॥ रहस्यं सुप्रकाशं च न देयमकृतात्मने । इदं पवित्रं पुण्यं च गुह्यं रक्ष्यं च नित्यशः ॥ सर्वसङ्गान्परित्यज्य सर्व भूतहितेरतः । भिक्षाशी निरहङ्कारो रुद्रभक्तो जितेन्द्रियः ॥ भस्मस्नायी² त्रिषवणं तत्रैव शरणं³ गतः । त्रीण्येतानि प-

१ पी २ शायी ३ शमनं

वित्राणि यस्तु वेत्ति च नित्यशः ॥ भस्मभक्तं भगवतो जितक्रोधो जितेन्द्रियः । अधीत्य विधिवद्रुद्रं किमन्यज्ज्ञातुमिच्छति ॥ ॥

एभिर्यस्तु गुणैर्युक्तः षड्भिर्मासैः प्रत्यक्षं भगवन्तं जटामुकुटधारिणमीशानं पश्यतीत्याह श्रीभगवान्महादेवः ॥ मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां विधाय । भस्मच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥ नित्यं दण्डी नित्ययज्ञोपवीती नित्यं ध्याता भस्मना कर्मबन्धी । रुद्रं दृष्ट्वा देवमीशानमुग्रं याति स्थानं तेन साकं तदीयम् ॥

अनेन मन्त्रपाठेन (होमेन) आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं श्रमिहारुद्रदेवता सन्तोषणार्थं भगवान् अघोरः तत्पुरुषः सद्योजातः वामदेव : असुरबलहा ईशानः बहुरूपः विश्वरूपः त्र्यम्बक· त्रिनेत्रः त्रिशूलहस्तः महामृत्युञ्जयभट्टारकः शतरुद्रेश्वरः वृषभवाहनः सानुचरः सपरिवारः भवो देवः न पार्वतीसहितः परमेश्वरः प्रीयतां प्रीतोऽस्तु ॥ ॥

अथ रुद्राध्यायस्य द्वितीयतर्पणम् ॥

नमस्ते रुद्र इत्येतत्सर्वोपद्रवनाशनम् । सर्वशान्तिकरं प्रोक्तं महापातकनाशनम् ॥ रक्षोघ्नं च यशस्यं च लक्ष्म्यायुः

१ मण्डितं

पुष्टिवर्धनम् । अध्यवोचदित्यनेन रक्षास्याद्व्याधितस्य च ॥ सिद्धार्थकानां क्षेपेन पथि चैतत्सदा पठेत् । क्षेमेन स्वगृहानेति सर्वबाधाविवर्जितः ॥ असौ यस्ताम्र इत्येतत्पठेन्नित्यं दिवाकरम् । उपतिष्ठेत धर्मज्ञः सायं प्रातरतन्द्रितः ॥ अन्नमक्षय्यमाप्नोति दीर्घमायुश्च विन्दति । प्रमुञ्च धनुरित्येतत्षड्भिरायुधमन्त्रणम् ॥ रिपूणां भङ्गदं युद्धे नात्र कार्या विचारणा । मानो महान्त इत्येतद्बालानां शान्तिकारकम् ॥ नमो हिरण्यबाहवेऽनुवाकैः षड्भिरेव च । राजिकांस्तिलतैलाक्ताञ्जुहुयाच्छत्रुनाशनम् ॥ नमो वः किरिकेभ्यश्च हुत्वा पद्मलक्ष्यं नरः । राज्यलक्ष्मीमवाप्नोति नात्र कार्या विचारणा ॥ बिल्वानां लक्षहोमेन कनकं बहु विन्दति । इमा रुद्रायेति तिलैः कृत्वा होमं विचक्षणः ॥ श्रीघ्रमेव महाभाग धनमाप्नोत्यचिन्तितम् । अनेनैव तु मन्त्रेण धूर्वाहोमेन मानवः ॥ सर्वव्याधिविनिर्मुक्तो भयान्सर्वान्व्यपोहति ॥ जटारोहेण इध्मानां या ते रुद्र शिवा तनूः । हुत्वायुतं तु धर्मज्ञः पुत्रं प्राप्नोत्यभीप्सितम् ॥ असङ्ख्याताः सहस्राणि मन्त्रैः स्यादाभिचारकम् । नमोऽस्तु रुद्रेभ्य इति प्रोक्ता प्रत्यङ्गिरा परा ॥ पाठमात्रं पठेन्नित्यं रुद्राध्यायस्य मानवः । सर्वदुःखविनिर्मुक्तः सर्वसंपत्समन्वितः ॥ यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम् । इह लोके तथा चान्ते रुद्रलोकं स गच्छति ॥

इति फलम् ॥

ओ३म्

॥ देव्यै नमः ॥

॥ अथ देवीपञ्चके ॥

# ॥ अस्यवामनामकं देवीसूक्तम् ॥

अरिशङ्खकृपाणखेटबाणा-
न्सधनुःशूलकतर्जनीं दधाना ।
भवतां महिषोत्तमाङ्गसंस्था
नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥

आरक्ताभां त्रिनेत्रां मणिमुकुटवतीं रत्नताटङ्करम्यां
हस्ताम्भोजैः सपाशाङ्कुशमदनधनुःसायकैर्विस्फुर-
न्तीम् । आ पीनोत्तुङ्गवक्षोरुहतटविलुठत्तारहारो-
ज्ज्वलाङ्गीं ध्यायाम्यम्भोरुहस्थामरुणनिवसनामीश्व-
रीमीश्वराणाम् ॥

अस्य द्विपञ्चाशदृचस्तवन्त्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यऽत्र प्रायेण ज्ञानमोक्षान्तरप्रशंसा च दीर्घतमा ऋषिः पञ्चपादं साकञ्जानां यद्गायत्रेऽयं स शिङ्क्ते सप्तार्धगर्भा गौरीरिति जगत्यः । एतदन्तं च वैश्वदेवम् । तस्याः समुद्रा इति वाचः समुद्रा आपोऽन्तरं सा प्रस्तारपङ्क्तिः । शकमयमिति शकधूमः । उक्षाणम्पृश्निमिति सोमः । त्रयः केशिन इत्यग्निर्वायुस्सूर्यश्च केशिनः । चत्वारि वाग्वाचः । इन्द्रं मित्रं सौर्ये । द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनम् । यस्ते सरस्वत्यै । यज्ञेन साध्येभ्यः । परानुष्टुप् सौरी पर्जन्याग्निदेवता वा । अन्त्या सरस्वतः सूर्यस्य वा । शिष्टा स्त्रिष्टुभः ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः । तृतीयो भ्राता घृतपृष्ठो अस्यात्रा-

१ सौर्यौ

पश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥ सप्त युञ्जन्ति रथ-
मेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभिच-
क्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥ २ ॥
इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्य-
श्वाः । सप्त स्वसारो अभिसन्नवन्ते यत्र गवां निहि-
ता सप्त नाम[1] ॥ ३ ॥ को ददर्श प्रथमं जायमानम-
स्थन्वन्तं यदनस्था बिभर्ति । भूम्या असुरसृगात्मा
क्व स्वित्को विद्वाँसमुप गात्प्रष्टुमेतत् ॥ ४ ॥ पाकः पृ-
च्छामि मनसाविजानन्देवानामेना निहिता पदानि ।
वत्से बष्कयेऽधि सप्त तन्तून्वि तत्निरे[2] कवय ओत वा
उ ॥ ५ ॥ १४ व० १ अचिकित्वाञ्चिकितुषश्चिदत्र कवी-
न्पृच्छामि विद्मने न विद्वान् । वि यस्तस्तम्भ षळिमा
रजाँस्यजस्य रूपे किमपि स्विदेकम् ॥ ६ ॥ इह
ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।

१ धाम २ तात्निरे

शीर्ष्णः क्षीरं दुह्रते[1] गावो अस्य वव्रिं वसाना उ-
दकं पदापुः ॥ ७ ॥ माता पितरमृत आ बभाज
धीत्यग्रे मनसा सँ हि जग्मे । सा बीभत्सुर्गर्भर-
सा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥ युक्ता
मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः ।
अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योज-
नेषु ॥ ९ ॥ तिस्रो मातृस्त्रीन्पितृन्बिभ्रदेक ऊर्ध्व-
स्तस्थौ नेमव[2] ग्लापयन्ति । मन्त्रयन्ते[3] दिवो अमु-
ष्य पृष्ठे विश्वविदं[4] वाचमविश्वामिन्वाम्[5] ॥ १० ॥
॥ १५ ॥ व० २ द्वादशारं नहि तज्जराय वर्वर्ति
चक्रं परि द्यामृतस्य । आ पुत्रा अग्ने मिथुनासो
अत्र सप्त शतानि विंशतिश्च तस्थुः ॥ ११ ॥ प-
ञ्चपादं पितरं द्वादशाकृतिं[6] दिव आहुः परे अर्धे
पुरीषिणम् । अथेमे अन्य उँपरि[7] विचक्षणं सप्तच-

१ दुहते २ नेम उ (नेमेव) ३ यन्ति ४ श्वमिदं ५ न् ६ तिदे ७ उपरे

क्रे षळर आहुरर्पितम् ॥ १२ ॥ पञ्चारे चक्रे परि-
वर्तमाने तास्मिन्ना तस्थुर्भुवनानि विश्वा । तस्य ना-
क्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः
॥ १३ ॥ सनेमि चक्रमजरं वि वावृत उत्तानायां
दश युक्ता वहन्ति । सूर्यस्य चक्षू रजसैत्यावृतं
तस्मिन्नार्पिता भुवनानि विश्वा ॥ १४ ॥ साकञ्जा-
नां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इ-
ति । तेषामिष्टानि विहितानि धामशः स्थात्रे रेज-
न्ते विकृतानि रूपशः ॥ १५ ॥ १६ ॥ व० ३ ॥
स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वा-
न्न वि चेतदन्धः । कविर्यः पुत्रः स ईमा चिकेत
यस्ता विजानात्स पितुष्पितासत् ॥ १६ ॥ अवः
परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्था-
त् । सा कद्रीची कं स्विदर्धं परागात्क स्वित्सूते

१ इमा

नहि यूथे अन्तः ॥ १७ ॥ अवः परेण पितरं यो
अस्यानुवेद पर एनावरेण । कवीयमानः क इह
प्र वोचद्देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥
ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ
अर्वाच आहुः । इन्द्रश्च या चक्रथुः सोम तानि
धुरा न युक्ता रजसो वहन्ति ॥ १९ ॥ द्वा सुप-
र्णा सयुजा सखाया समानं वृक्षं परि षस्वजा-
ते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अ-
भि चाकशीति ॥ २० ॥ १७ ॥ व० ४ ॥

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभि-
स्वरन्ति । इनो विश्वस्य भुवनस्य गोपाः स मा
धीरः पाकमत्रा विवेश ॥ २१॥ यस्मिन्वृक्षे मध्वदः
सुपर्णा निविशन्ते सुवते चाधि विश्वे । तस्येदा-
हुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद । २२।

यद्गायत्रे अधि गायत्रमाहितं त्रैष्टुभाद्वा त्रैष्टुभं नि-
रतक्षत । यद्वा जगज्जगत्याहितं पदं य इत्तद्विदु-
स्ते अमृतत्वमानशुः ॥ २३ ॥ गायत्रेण प्रति मि-
मीते अर्कमर्केण साम त्रैष्टुभेन वाकम् । वाकेन
वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः
॥ २४ ॥ जगता सिन्धुं दिव्यस्तभायद्रथन्तरे सू-
र्यं पर्यपश्यत् । गायत्रस्य समिधस्तिस्र आहुस्ततो
मह्ना प्र रिरिचे महित्वा ॥ २५ ॥१८ ॥ व० ५
उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोह-
देनाम् । श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्म-
स्तदु षु प्र वोचम् ॥ २६ ॥ हिङ्कृण्वती वसु-
पत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् । दु-
हामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौ-
भगाय ॥ २७ ॥ गौरमीमेदनु वत्सं मिषन्तं मूर्धानं

हिङ्ङ्कृणोन्मातवा उ । सृक्वाणं घर्ममभि वावशा-
ना मिमाति मायुं पयते पयोभिः ॥ २८ ॥ अयं
स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वस-
नावधि श्रिता । सा चित्तिभिर्नि हि चकार मर्त्यं
विद्युद्भवन्ती प्रति वव्रिमौहत ॥ २९ ॥ अनच्छ-
ये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम् ।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयो-
निः ॥ ३० ॥ १९ ॥ व० ६ ॥ अपश्यं गोपामनि-
पद्यमानमा च परा च पथिभिश्चरन्तम् । स स-
ध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः
॥ ३१ ॥ य ईं चकार न सो अस्य वेद य ईं द-
दर्श हिरुगिन्नु तस्मात् । स मातुर्योना परिवीतो
अन्तर्बहुप्रजा निर्ऋतिमा विवेश ॥ ३२ ॥ द्यौर्मे
पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी म-

हीयस्। उत्तानयोश्चम्बो३र्योनिरन्तरत्रा पिता दु-
हितुर्गर्भमाधात्॥ ३३॥ पृच्छामि त्वा परमन्तं पृ-
थिव्याः पृच्छामि यत्र भुवनस्य नाभिः। पृच्छा-
मि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं
व्योम॥ ३४॥ इयं वेदिः परो अन्तः पृथिव्या
अयं यज्ञो भुवनस्य नाभिः। अयं सोमो वृष्णो
अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम॥ ३५॥
२०॥ व० ७॥सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्ति-
ष्ठन्ति प्रदिशा विधर्मणि। ते धीतिभिर्मनसा ते
विपश्चितः परिभुवः परि भवन्ति विश्वतः॥ ३६॥
न वि जानामि यदिवेदमस्मि निण्यः सन्नद्धो म-
नसा चरामि। यदा मागन्प्रथमजा ऋतस्यादि-
द्वाचो अश्नुवे भागमस्याः॥ ३७॥ अपाङ् प्रा-
ङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः।

ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्यु-
र्न नि चिक्युरन्यम् ॥ ३८ ॥ ऋचो अक्षरे परमे
व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न
वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समा-
सते ॥ ३९ ॥ सूयवसाद्भगवती हि भूया अथो
वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानीं
पिब शुद्धमुदकमाचरन्ती ॥ ४० ॥ २१ ॥ व०८ ॥
गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा
चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्ष-
रा परमे व्योमन् ॥ ४१ ॥ तस्याः समुद्रा अधि
विक्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः । ततः
क्षरत्यक्षरं तद्विश्वमुप जीवति ॥ ४२ ॥ शकमयं
धूममारादपश्यं विषूवता पर एनावरेण । उक्षाणं
पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यास-

न् ॥ ४३ ॥ त्रयः केशिन ऋतुथा वि चक्षते सं-
वत्सरे वपत एक एषाम् । विश्वमेको अभि चष्टे
शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥ ४४ ॥ च-
त्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा
ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तु-
रीयं वाचो मनुष्या वदन्ति ॥ ४५ ॥ इन्द्रं मित्रं
वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वान-
माहुः ॥ ४६ ॥ २२ । व० ६ ॥ कृष्णं नियानं हर-
यः सुपर्णा अपो वसाना दिवमुत्पतन्ति । त आ-
ववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥
४७ ॥ द्वादश प्रधयश्चक्रमेकं त्रीणि नाभ्यानि क
उ तच्चिकेत । तस्मिन्त्साकं त्रिशता न शङ्कवो-
ऽर्पिताः षष्टिर्न चलाचलासः ॥ ४८ ॥ यस्ते स्तनः

१ नभ्यानि

शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धा-
तवे कः ॥ ४९ ॥ यज्ञेन यज्ञमयजन्त देवास्ता-
नि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमा-
नः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ५० ॥
समानमेतदुदकमुच्चैत्यव चाहभिः । भूमिं पर्जन्या
जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥ ५१ ॥ तेजोऽसि ॥
दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोष-
धीनाम् । अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्त-
मवसे जोहवीमि ॥ ५२ ॥ २३ ॥ व० १० ॥ ८१८ ॥

---

इति

श्री अस्यवामनामकं देवीसूक्तं

समाप्तम् ॥

---

१ हो

ॐ

॥ अथ ॥

# ॥ देवीसूक्तम् ॥

गौराङ्गीं धृतपङ्कजां त्रिनयनां श्वेताम्बरां सिंहगां चन्द्रोद्भासितशेखरां स्मितमुखीं दोर्भ्यां वहन्तीं गदाम्। विष्णिवन्द्राम्बुजयोनिशम्भुत्रिदशैः सम्पूजिताङ्घ्रिद्वयीं गौरीं मानसपङ्कजे भगवतीमिष्टप्रदां तां भजे ॥

चन्द्रार्धाङ्कितशेखरां त्रिनयनां कोटीन्दुसूर्यप्रभां नानारत्नसहस्रबद्धरशनां प्रेतासने संस्थिताम्।

शङ्खं तोमरपट्टिमाब्जयुगलान्दोर्भिर्वहन्तीं मुदा ध्यायेऽहं हृदये सदा भगवतीं मातङ्गिनीं हारिणीम् ॥

कया पञ्चोनः संवादस्तृतीयाद्ययुजो मरुतां[1] वाक्यमन्त्यस्तृचो[2]ऽगस्त्यस्य शिष्ठा इन्द्रस्यैकादशी च म-

---

१ मारुतं २ स्तृचो ग

तां[1] त्विन्द्रो देवता ॥

कया शुभा सवयसः सनीळाः[2] समान्या मरुतः
सं मिमिक्षुः । कया मती कुत एतास एतेऽर्चन्ति
शुष्मं वृषणो[3] वसूया ॥ १ ॥ कस्य ब्रह्माणि जु-
जुषुर्युवानः को अध्वरे मरुत[4] आ ववर्त । श्येनाँ
इव ध्रजतो[5] अन्तरिक्षे केन महा मनसा रीरमाम
॥ २ ॥ कुतस्त्वमिन्द्र माहिनः[6] सन्नेको यासि स-
त्पते किं त इत्था । सं पृच्छसे समराणः शुभा-
नैर्वोचेस्तन्नो[7][8] हरिवो यत्ते अस्मे ॥ ३ ॥ ब्रह्माणि
मे मतयः शँ सुतासः शुष्म इयर्ति प्रभृतो मे
अद्रिः । आशासते प्रति हर्यन्त्युक्थेमा[9] हरी व-
हतस्ता नो अच्छ ॥ ४ ॥ अतो वयमन्तमेभि-
र्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः । महोभिरेताँ
उप युज्महे निन्द्र स्वधामनु हि नो बभूथ ॥ ५ । २४ ।

१ ताँस्त्वि २ ळाः ३ षयो ४ मरुतां (मरुतो) ५ ध्र (प्र) (प्रजता) ६ म ७ र ८ वोचिस्तन्वो
९ त्युक्थे मा (त्युक्थे मा)

क्व१स्यावो मरुतः स्वधासीद्यन्मामेकँ समधत्ताहिहत्ये । अहं ह्यु१ग्रस्तविषस्तु विष्मान्विश्वस्य शत्रोरनमं वधस्नैः ॥ ६ ॥ भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः । भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥ ७ ॥ वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् । अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकार वज्रबाहुः ॥ ८ ॥ अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः । न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ९ ॥ एकस्य चिन्मे विभ्व१स्त्वोजो या नु दधृष्वान्कृणवै मनीषा । अहं ह्यु१ग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् १० ॥ २५ ॥ अमन्दन्मा मरुतः स्तोमो अत्र

---

१ ह्यू २ नसं [illegible] (…) ३ [illegible] ४ [illegible] [सम] ५ वम
६ न्नु ७ विभुस्तेजो [विद्ध)

यन्मे नरः श्रुत्यं ब्रह्म चक्र। इन्द्राय वृष्णे सुमखाय महॅं सख्ये सखायस्तन्वे तनूभिः ॥ ११ ॥ एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः। सञ्चक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा च नूनम् ॥ १२ ॥ को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः। मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥ १३ ॥ आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा। ओ षु वर्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥ १४ ॥ एष वः स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः। एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ १५ ॥ २६ ॥ १०८ ॥

---

१ नः २ छदयाथा (छर्दयाथा) ३ छ ४ स्मांश्चक्रे ५ त ६ मारुता ७ ष्ठ तन्वा वयं

श्रीशङ्खचक्रमुसलाम्बुजयुग्महस्तां
नागेन्द्रहारवलयाङ्कितकण्ठमालाम् ।
सिन्दूरकुंकुमसहस्रमरीचिदीप्तिं
श्रीशारिकां त्रिनयनां हृदये स्मरामि ॥

उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां सिंहासनोपरिग-
तामुरुगोपवीताम् । खड्गाम्बुजाढ्यकलशामृतपात्रह-
स्तां राज्ञीं भजामि विकसद्वदनारबिन्दाम् ॥

ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयान्तःस्थितां
ज्वालाडम्बरभूषितां सुवदनां नित्यमदृश्यां जनैः ।
षट्चक्राम्बुजमध्यगां वरगदाम्भोजाभयान्बिभ्रतीं
चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहम् ॥

अहमष्टौ वागम्बिनी[1] तुष्टावात्मानं त्रिष्टुप् द्विती-
या जगती ॥

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदे-

[1] वागाम्भृणी

वैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहम-
श्विनोभा ॥ १ ॥ अहं सोममाहनसं बिभर्म्यहं त्व-
ष्टारमुत पूषणं भगम् । अहं दधामि द्रविणं हवि-
ष्मते सुप्राव्ये१यजमानाय सुन्वते ॥ २ ॥ अहं-
राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियाना-
म् । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्या-
वेशयन्तीम् ॥ ३ ॥ मया सो अन्नमत्ति यो विप-
श्यति यः प्राणिति य ईं शृणोत्युक्तम् । अमन्तवो
मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि
॥ ४ ॥ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत
मानुषेभिः । यं कामये तंतमुग्रं कृणोमि तं ब्र-
ह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥ ११ ॥ अहं
रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ

विवेश ॥ ६ ॥ अहं सुवे पितरमस्य मूर्धन्मम योनिर-
प्स्व१न्तः समुद्रे। ततो वि तिष्ठे भुवनानु विश्वोतामूं
द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥ तेजोऽसि ॥ अहमेव
वात इव प्र वाम्यारभमाणा भुवनानि विश्वा। परो
दिवा पर एना पृथिव्यैतावती महिना सम्बभूव
॥ ८ ॥ १२ ॥

उद्यद्भानुसहस्रसन्निभमुखीं पीनस्तनीं पद्मगां
दोर्भिरंकुशपाशपुस्तकजपां संबिभ्रतीमादरात् ।
ब्रह्माविष्णुमहेश्वरेन्द्रमुनिभिर्नित्यं स्तुतां वन्दनैः
स्तोत्राद्यैर्भुवनेश्वरीं त्रिनयनां हृत्पङ्कजेऽहं भजे ॥

त्रिलोचनां सूर्यसहस्रशोभां
सिंहासनस्थां द्विभुजां धृतासिम् ।
पीताम्बरां विष्णुविधीशसेव्यां
कामेश्वरीं तां हृदये स्मरामि ॥

इन्द्रं मित्रमिति सप्त (कुत्सो[1] विश्वेदेवा जगती) त्रिष्टुबन्तम् ॥ ॥

इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे। रथं न दुर्गा[2]द्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ १ ॥ त आदित्या आगता सर्वतातये भूत देवा वृत्रतूर्येषु शम्भुवः। रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ २ ॥ अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा[3]। रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ३ ॥ नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे। रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ४ ॥ बृहस्पते सदमिन्नः[4] सुगं कृधि शं योर्यत्ते मनुर्हितं[5] तदीमहे। रथं

१ कुत्सआंगिरसो २ र्गा व ३ ऋतावृता (वृतावृधा) ४ न ५ नुर्हि

न दुर्गाह्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ५ ॥ इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ्ह ऋषिरह्वदूतये । रथं न दुर्गाह्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ६ ॥

॥ तेजोऽसि ॥ देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ७ ॥

संपूर्णेन्दुप्रभाभां सकललिपिमयीं लोलवक्त्रां त्रिनेत्रां शुक्लालङ्कारभूषां शशिमुकुटजटाजूटयुक्तां प्रसन्नाम्। पुष्पस्रक्पूर्णकुम्भं वरमपि दधतीं नीलकण्ठासनस्थां वाग्देवीं सौम्यवक्त्रां कुचभरनमितामम्बिकां तां नमामि ॥

वाणीं पूर्णसुधाकरोज्ज्वलमुखीं कर्पूरकुन्दप्रभां
चन्द्रार्धाङ्कितमस्तकां निजकरैः संबिभ्रतीमादरात् ।
वीणामक्षगुणं सुधाढ्यकलशं विद्यां च तुङ्ग-
स्तनीं दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥

इदमपि च ॥ तामग्निवर्णां सौभरिर्दुर्गा त्रिष्टुप् ॥

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफ-
लेषु जुष्टां । दुर्गां देवीं शरणमहं प्रपद्ये सुत-
रसेतरसे नमः ॥ १ ॥ अग्ने त्वं पारयानव्यो
अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा । पू[2]श्च पृथ्वी
बहुला न उर्वी भवा तोकाय तनयाय शं योः
॥ २ ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं[3] न
नावा दुरितातिपर्षि । अग्ने अत्रिवनमसा गृणानो-
ऽस्माकं बु[4]ध्यविता तनूनाम् ॥ ३ ॥ पृतनाजितँ
सहमानमुग्रमग्निँ हुवेम परमात्[5]मदस्थात् । स नः

१ सुतरसि [सुतरसे] २ पूं ३ (सिन्धुर्न नावा) सिन्धुर्नावा ४ बोध्य ५ त्सधस्थात्

पर्षदतिदुर्गाणि विश्वा द्यामाद्देवो अतिदुरितात्य-
ग्निः ॥ ४ ॥ प्रत्नो हि कमीड्यो अध्वरेषु सना-
च्च होता नव्यश्च सत्सि । स्वां चाग्ने तन्वं
पि[1]प्रयस्वास्मभ्यं च सौ[2]भगमा यजस्व ॥ ५ ॥ *
यद्वाग्वदन्त्य[3]विचेतनानि राष्ट्री देवानां निषसाद
मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्व सिदस्याः
परमञ्जगाम ॥ ३ ॥ दे[4]वीं वाचमजनयन्त देवास्तां
विश्वरूपाः[5] पशवो वदन्ति । सा[6] नो मन्द्रेषमूर्जं
दुहाना धेनुर्वागस्मानुप सुष्टुतैतु[7] ॥ ७ ॥ प्रा णो
देवी सरस्वती वाजेभिर्वाजिनी वती । धीनाम[8]वि-
त्र्यवतु ॥ ८ ॥ ॐ गायत्र्यै नमः ॐ भूर्भुवस्स्वः
तत्सवितु० ३ ॥ तेजोऽसि ॥ जातवेदसे सुनवाम सो-
ममरातीयतो नि दहाति वेदः । स नः पर्षदति
दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ ॥

१ प्री २ भा ३ न्ति ४ देवीं ५ पां ६ स नो मन्द्रेषु ऊर्जे ७ त्वैत (तीत] ८ म ९ वृ



* आदौ अग्न आ यूंष्यग्ने रत्र० मयी भूर्तो० अग्ने अग्ना पश्चाद्यद्वाग्वदन्ति चतुष्टयं जुहुयात् ॥

अग्न आयूँष्यग्ने पवस्वाग्ने पावक रोचिषा ॥
स नः पावक दीदिवो ऽग्ने देवाँ इहावह । उप-
यज्ञँ हविश्च नः ॥ अग्निश्शुचिव्रततम उदग्ने
शुचयस्तव । सुत्रामाणं महीमू षु ॥ तँ हि
शश्वन्त ईडते श्रुचा देवँ घृतश्च्युता । अग्निँ
हव्याय वोढवे ॥
अग्निं दूतं पुरो दधे ॥ ॥
स हव्यवाडमर्त्य उशिग्दूतश्च नोहितः । अग्नि-
र्धिया समृण्वति ॥ अग्निँ स्तोमेन बोधय समि-
धानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥
प्रेद्धो अग्न इमो अग्ने ॥
पीपिवाँसँ सरस्वतः स्तनं यो विश्वदर्शतः । धु-
क्षीमहि प्रजामिषम् ॥ ये ते सरस्वन्नूर्मयो
मधुमन्तो घृतश्च्युतः । तेभिर्नोऽविता भव ॥

१ दिवो २ व्रतमा ३ घृतच्यु ४ वोढवे ५ ळ ६ उशिग्दूतश्च नेहित: ७ मन्वति (मृन्वति) ८ ग्ने ९ अ १० यत्ते

दिव्यँ सुपर्णं वायसं बृहन्तमपाँ पतिं वृषभमोषधीनाम् । [1]अभीपतो [2]वृष्टिभिस्तर्पयन्तँ सरस्वन्तमवसे [3]जोहवीमि ॥ यस्य व्रतमुपतिष्ठन्त आपो यस्य व्रते पशवो यन्ति सर्वे । यस्य व्रते पुष्टिपतिर्निविष्टस्तँ सरस्वन्तमवसे जोहवीमि ॥ ॥

मयोभूर्वातो इत्यादिगयस्य त्रितस्य (कात्तीवतः शंबरो गौस्त्रिष्टुप्) ॥

कः स्विदेकाकी चरतीत्यादि दीर्घतपसं आङ्गिरसस्यात्रेयस्य ॥

अम्बे अम्बालीति वृषातकिः ॥ ॥

मयोभूर्वातो अभि वा[4]तूस्रा ऊर्जस्वतीरोषधीरा [5]विशन्ताम् । पीवस्वतीर्जीवधन्याः पिबन्त्यँवसाय पद्वते रुद्र नो मृळ ॥ याः सरूपा विरूपा एक[6]रूपा यासामग्निर्नि[6]ष्ट्या नामानि वेद ।

१ अभि २ वृष्ट्या (वृष्ट्या) ३ [illegible]

या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥ या देवेषु तन्व[1]मैरयन्त यासाँ सोमो विश्वा रूपाणि वेद । ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥ प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैर्यज्ञयैः संविदानः। बह्वीर्भ[2]वन्तीरुप नो गोष्ठमा[3]गुस्तासां वयं प्रजयासँ सदेम ॥ यजुः ॥ इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाह। म[4]हीमू षु सुत्रामाणम् ॥ ६ ॥

कस्स्विदेकाकी चरति क उ स्विज्जायते पुनः । किँ स्विद्धिमस्य भेषजं किँ स्विदावपनं महत् ॥ सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥ का स्विदासीत्पूर्वचित्तिः किँ स्विदासीद्बृहद्वयः । का स्विदा-

१ ह २ वन्तु रुप ३ शु (क) ४ मयीमू ५ कं ६ याः

सीत्पिलिप्पिला का स्विदासीत्पिशङ्गिला ॥
द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः । अविरासी-
त्पिलिप्पिला रात्रिरासीत्पिशङ्गिला ॥ पृच्छामि त्वा
परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिम् ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वा-
चः परमं व्योम ॥ वेदिमाहुः परमन्तं पृथिव्या
यज्ञमाहुर्भुवनस्य नाभिम् । सोममाहुर्वृष्णो अ-
श्वस्य रेतो ब्रह्मैव वाचः परमं व्योम ॥ ७ ॥

---

बालार्कद्युतिमिन्दुखण्डविलसत्कोटीरहारोज्ज्वलां
रत्नाकल्पविभूषितां कुचनतां शालिंकुरैर्मञ्जरीम् ।
पद्मकौस्तभरत्नमप्यविरतं संबिभ्रतीं सस्मितां
फुल्लाम्भोजविलोचनत्रययुतां ध्याये परामम्बिकाम् ॥
अम्बे अम्बाल्यम्बिके न मा नयति कश्चन



१ पिलं पिला २ रा ३ रात्री ४ त्वा ५ ताः ६ परां अन्तः

ससस्त्यश्वकः सुभगे काम्पीलवासिनि ॥ स्वर्गे-
लोके संप्रोर्णुवाथा[1]महमजामि गर्भधमात्ममजामि
गर्भधं तौ सह चतुरः पादः संप्रसारयवहै वृषा
वां रेतोधा रेतो दधातूत्स[2]क्थ्योर्गृदं धेह्यञ्जिमुद-
ञ्जिमन्वज । यः स्त्रीणां जीवभोजनो य आसां बि-
लधा[4]वनः । प्रियः स्त्रीणाम[3]पीच्यो य आसाँ कृष्णे
लक्ष्मणि सँन्दिगृधिं पराबधीत् ॥ अम्बे अम्बा-
ल्यम्बिके न मा नयति कश्चन स[5]संस्त्यश्वकः ॥
ऊर्ध्वामेनामुच्छ्रयताद्वे[6]णुभारं गिरा इव । अधास्या
म[7]ध्यमेधताँ शीते वाते पुनन्निव ॥ अम्बे अम्बा-
ल्यम्बिके न मा नयति कश्चन ससंस्त्यश्वकः ॥
य[8]द्धरिणी यवमत्ति न पुष्टं पशु मन्यते । शूद्रा
यदर्यजारा[9] न पोषाय धनायति ॥ अम्बे अम्बा-

---

१ माहमजामि गर्भधमा त्वमजासि गर्भधं २ त्सदत्योर्गृधं ३ रूपेश्यो(मपीश्यो) मपीच्यो )
४ सर्दि गृदिं ५ म ६ नुं भारं गिरो इव ७ मध्ये मधतां शिते वाते पुनर्निव (पुनर्नत्र)
८ यद्धिरणी यवात्ति ९ ना १० नवः

ल्यम्बिके न मा नयति कश्चन ससस्त्यश्वकः ॥
इयं यका शकुन्तीकाहलमिति वञ्चति । आहतं
गभे पसो निजल्गल्गूति धानिका ॥ अम्बे अम्बा-
ल्यम्बिके न मा नयति कश्चन ससस्त्यश्वकः ॥
माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः ।
प्रसुलामीति ते पिता गभे मुष्टिमतँसयत् ॥
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्र ण आयूँषि तारिषत् ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्त-
स्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा
अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो
जनयथा च नः ॥ यद्वाग्वदन्त्यविचेतनानि राष्ट्री
देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे

---

१ शकुन्तिका [illegible]

पयांसि क्व सिदस्याः परमं जगाम ॥ दैवीं वाच-
मजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टु-
तैतु ॥ प्र णो देवी सरस्वती वाजेभिर्वाजिनी-
वती । धीनामवित्र्यवतु ॥ ॐ गायत्र्यै नमः
ॐ भूर्भुवः स्वः तत्सवितु० ३ ॥ तेजोऽसि ॥
जातवेदसे सुनवाम सोममरातीयतो नि दहाति
वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव
सिन्धुं दुरितात्यग्निः ॥ ॥

॥ इति देवीपञ्चकं समाप्तम् ॥

---

॥ अथ तर्पणम् ॥

स्तेयं कृत्वा द्विजो मोहादहोरात्रोषितः शुचिः ।
सूक्तं जप्त्वास्यवामीयं सद्यो मुच्येत किल्विषात् ॥

ज्ञातिपुत्रसुहृन्मित्रैर्यस्तु राज्यं चिकीर्षति । नित्यं तु नियतो भूत्वा सूक्तं च मनसा जपेत् ॥ कया[1] शुभेति च जपञ्ज्ञातिश्रैष्ठ्यमवाप्नुयात् । अहं रुद्रेभिरिति च वाग्मी भवति मानवः ॥ कया शुभेति पैशुन्यं कृत्वा चाभक्ष्यभक्षणम् । श्रुत्वा परं रहस्यं च मुच्यते त्वाह कौशिकः । जातवेदस एतस्यां पूर्णं ब्रह्म परं स्थितम् ॥ सिसाधयिषुरित्थं च प्रस्थाने मनसा जपेत् । सिद्धार्थः स्वस्तिमानेति प्रमीयेत न चाध्वनि ॥ कृतार्थश्च गृहान्गच्छन्नेतामेव सदाभ्यसेत् । उदिते सवितर्येतां जपेदस्तं गते तथा ॥ अहः स्वस्त्ययनं प्राता रात्रौ स्वस्त्ययनं निशि । व्युष्टं यो हि जपेन्नित्यमेतद्दुःस्वप्ननाशनम् ॥ त्रिस्सप्तदश कृत्वो य ऋचमन्तर्जले जपेत् । जातवेदस इत्येतां

[1] कयाशुभेति पञ्चभिः श्रुतिभिः श्रैष्ठ्यमाप्नुयात् २ सं

सर्वपापैः प्रमुच्यते ॥ अनेनैवोदकं प्रातरभिमन्त्र्य दिने दिने । पिबेन्मेधामवाप्नोति पठन्विप्रो न संशयः ॥ अग्न आयूंष्यग्ने पावस्वाग्ने पावकरोचिषः । एतां जप्त्वा नरो धीमान्सद्यो मुच्येत किल्बिषात् ॥ मयोभूर्वातो इत्येतां जप्त्वा ध्यात्वा सुरेश्वरि । स याति भवनं देव्या यत्र गत्वा न शोचति ॥ कः स्विदेकाकीति ऋचं जप्त्वा हि तन्मयो भवेत् ॥ अम्बे अम्बाल्यम्बिकेति देवीमाराध्य सर्वतः । तस्य चैव पुरा देवी दर्शनमेष्यति ध्रुवम् ॥ गमिष्यन्दूरमध्वानमुपातिष्ठेद्दिवाकरम् । सहस्रकृत्वोऽनेनैव शतकृत्वोऽथ वा पुनः ॥ स गत्वा क्षेममध्वानं कृतार्थश्च निवर्तते । सर्वस्वं वा एकतश्च वाचः सूक्तानि चैव हि ॥ समग्रमथ ऋग्वेदं जातवेदस्तथैकतः । सर्ववेदा-

भिगमनं सर्वतीर्थावगाहनम् ॥ जातवेदस इत्येतत्समं वास्यान्नवासमम् । जपेत नित्यं यत्नेन कुर्यात्कर्माण्यतन्द्रितः ॥ स ब्रह्मपूतो भवति वायुभूतः खमूर्तिमान् ॥

माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ॥ शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥

अनेन मन्त्रपाठेन [होमेन] आत्मनो० श्री दुर्गादीवीप्रीत्यर्थं सकलकामनासिद्ध्यर्थं भगवती अमा कामा ८ श्रीशारिका भगवती श्रीशारदा भग० श्रीमहाराज्ञी भग० श्रीज्वाला भ० श्रीबीडा भ० वैखरी भ० वितस्ता भ० गङ्गा भ० यमुना भ०

शिवा भ० सन्ध्या भ० शीतला भ० तोतुला भ०
जया भ० विजया भ० मङ्गला भ० कालिका भ०
सिद्धलक्ष्मीर्भ० महालक्ष्मीर्भ० महागायत्री सा-
वित्री सरस्वती महात्रिपुरसुन्दरी सहस्रनाम्नी भवा-
नी सर्वरूपा श्रीदुर्गा भगवती कृत्स्नांहोहत्री स-
परिवारा शक्तिरूपा विश्वजननी पूर्वोक्तगुणरूपा
परा पररहस्या सर्वानन्दमयी चक्रेश्वरी वाग्देवी
सरस्वती परंब्रह्मस्वरूपा परामृतशक्तिः सर्वपीठे-
श्वरी सर्ववीरेश्वरी सर्वमन्त्रेश्वरी सर्वसिद्धीश्वरी
सर्ववेदेश्वरी सर्वबुद्धीश्वरी मधुकैटभविद्राविणी म-
हिषासुरसैन्यघ्नी महिषास्वरघातिनी धूम्रलोचन-
नाशिनी चण्ड-मुण्ड-रक्तबीज-स्वम्भ-निस्वम्भ-हा-
रिणी जगदुत्पत्तिकारिणी मातृकाचक्रासनदेवता
अजा अमा प्रमा अमोघदक्षसिद्धा सायुधा

सुवाहना सानुचरा परा परसपर्या सर्वोपचारैः पूजिता तृप्ता प्रीता मे भवतु ॥

लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा मतिः अमा कामा च चार्वाङ्गी इत्याद्याः प्रीयतां मम अनेकदेव्याः प्रीयन्तां प्रीता भवन्तु ॥

॥ इति तर्पणम् ॥

---

॥ अथ रक्षोघ्नमन्त्राः ॥ महौषधिगणाः ॥

तिलसर्वौषधिभिर्होमः ॥ ॥ या ओषधय इत्यनुवाको भिषज आथर्वणस्य ॥

या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहँ शतं धामानि सप्त च ॥
शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रतवो यूयमिमं मे अगदं कृत ॥

पुष्पवतीः [1]प्रसूमतीः फलिनीरफला उत । अश्वा
इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ ओषधीरि-
ति मातरस्तद्वो देवीरुप ब्रुवे । रपाँसि विघ्नतीरि[11]त
रक्षश्चा[2]तयमानाः ॥ [3]अश्वत्थे वो निषदनं पर्णे
वो वसतिष्कृता । गोभाज [4]इत्किलासथ यत्सन-
[5]वाथ पूरुषम् ॥ ८ ॥ अश्वावतीं [6]सोमावतीमूर्जयन्ती-
मुदोजसम् । आवित्सि सर्वा ओषधीरस्मा अरिष्ट-
तातये ॥ यदोषधय[7]स्समग्मत राजानस्सामिता [10]इव ।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥ उच्छु-
ष्मा ओषधीनां गावो गोष्ठादिवेरते । धनँ सनि-
ष्यन्तीनामात्मानं तव [8]पूरुष ॥ अति विश्वाः परि-
ष्ठाः स्तेन [9]इव व्रजमक्रमुः । ओषधयः प्राचुच्य-
वुर्यत्किञ्चित्तन्वो३रपः ॥ ९ ॥ यास्त आतस्थुरा-
त्मानमाविविशुः परुष्परुः । तास्ते यक्ष्मं विबाधन्ता-

१ प्रसुमतीः (प्रसूवरीः) २ श्चेतयमानः ३ अश्वत्थवो निषादनं (धनं) ४ य ५ वथ ६ सोम

७समग्मत ८ पुरुषः (पूरुषः) ९ इवा १० विव ११ व

मुग्रो मध्यमशीरिव ॥ यदहं वाजयन्निमा ओषधी-
र्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा
जीवगृभो यथा ॥ निष्कृतिर्नाम वो माताथो
त्वमसि निष्कृतिः । स[1]ं नः पतत्रिणीस्स्थ[2] यदाम-
यति निष्कृत ॥ साकं यक्ष्म प्रपत चाषेण किकि[3]-
दीविना । साकं वातस्य भ्राज्यां[4] साकं[5] नश्य निहा-
कया ॥ अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥
अवपतन्तीरवदन्दिवोऽन्तेभ्यस्परि । यं जीवम-
श्नवामहै न स रिष्याति पूरुषः ॥ याः फलिनीर्या
अफला अकोशाः कोशिनीश्च याः । बृहस्पति
प्रसूतास्ता नो मुञ्चन्त्वँहसः ॥ १० ॥ याश्चेद[6]मु-
पशृण्वन्ति याश्च दूरं परागताः । बृहस्पतिप्रसू-
तास्ता नो मुञ्चन्त्वँहसः ॥ याः सोमराज्ञीर्वरुणस्य

१ सराः (सीराः) २ स्स्था [स्स्थन] ३ कीकि ४ प्राज्या (भ्राज्या) ५ साकन्नास्य ६ यश्चेदमपश्टण्व
न्ति याश्च दूरमुपागताः । सर्वाः संगत्य [illegible]

राज्ञो यासां विश्वे देवा अधिपतयश्च सर्वे ।
या अन्तरिक्षे दिवि याः पृथिव्यां ता नस्तुता
[1]ओषधीः पारयन्तु ॥

सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः । तस्य स्पशो न निमिषन्ति भूर्णयः पदे पदे पाशिनः सन्ति सेतवः ॥ मलिम्लुचो नामासि [2]त्रयोदशमास इन्द्रस्य शर्मासीन्द्रस्य वर्मासीन्द्रस्य वरूथमासि तं त्वा प्रपद्ये स[3]-गुस्साश्वस्सपूरुषः ॥ सह यन्मेऽस्ति तेन स मे शर्म च वर्म च भव गायत्रींछन्दोमभिः प्रविशामि त्रि[4]ष्टुभं त्वचा प्रविशामि जगतीं माँसेन प्रविशाम्यनुष्टुभमस्थ्ना प्रविशामि पंक्तिं [5]मज्ज्ञा प्रविशामि ॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्यन्ति शूराः । तन्नस्त्रायतां [6]तन्वस्सर्वतो महदा-

---

१ ओषधयः २ त्रयोदशमासाः (त्रयोदशोमासः) ३ सगोपाश्वस्सपुरुषः ४ त्रै ५ [मज्ज्ञा] मज्ज्ञः
६ तन्न

युष्मन्तो जरामुपगच्छेम जीवाः ३८ १४ ॥

॥ अथ फलम् ॥

होमं सम्पाद्य तत्पश्चाद्रक्षोघ्नं तु समाचरेत् । रक्षोघ्नेन तु मन्त्रेण दोषाः सर्वे प्रयान्ति वै ॥ १ ॥ महौषधीभिः संयुक्तं तिलदर्भसमन्वितम् । सर्षपाभिर्यवैश्चैव तण्डुलेन च पूरितम् ॥ २ ॥ या ओषधीति मन्त्रेण शान्तिं वै कारयेद्द्विजः । अङ्गेऽङ्गे यद्भवेद्दोषं तत्सर्वं याति निश्चितम् ॥ ३ ॥ अग्नेरजीर्णनाशाय सर्वदोषप्रशान्तये । सर्वरोगविनाशाय सर्वकल्याणहेतवे ॥ ४ ॥ आर्तार्तिनाशहेत्वर्थं सर्वसिद्ध्यर्थहेतवे । शिरसि च ललाटे च भ्रुवोरक्ष्णोस्तथा मुखे ॥ ५ ॥ नासायामोष्ठयोस्तद्वत्कण्ठे च स्कन्दयोस्तथा । उरसि भुजयोर्नूनं मध्ये चैवोदरे तथा ॥ ६ ॥ नाभौ पृष्ठे गुदे तद्वद्गुह्ये लिङ्गे तथैव च ।

१ शान्तिकं २ तप ३ दोष ४ मीश्वर (मत्र वै) ५ भुजयोर्जठरे तद्वन्मध्ये वक्षसि वै तथा

ऊर्वोर्जान्वोर्जंघयोश्च पादयोश्च निरन्तरम् ॥ ७ ॥
रोम्णि रोम्णि सर्वकाले सर्वदैव नृपोत्तम[1] । प्रातर्मध्या-
ह्नसमये सायंकाले दिवा निशम् ॥ ८ ॥ कृतानि स-
र्वपापानि दोषाश्चैव विनिश्चितम् । कृतान्यप्यकृता-
नीह यान्ति नाशं द्विजोत्तम[2] ॥ ९ ॥ रक्षोघ्नेन कृतेनै-
वमपस्मारभयं न हि । रक्षोभयं राजभयं पथि भीः
शत्रुभीस्तथा ॥ १० ॥ सर्वबाधाप्रशमनं सर्वदुःख-
विमोचनम् । सर्वापराधशमनं सर्वदोषनिवर्हणम् ॥
॥ ११ ॥ कृतेनानेन होमेन यान्ति दोषाः क्षयं द्वि[3]-
ज ॥ अनेन रक्षोघ्नमन्त्रहोमेन आत्मनो वाङ्मनः
कायो० । अमुकराशिग्रहपीडानिवारणार्थं दिव्यन्त-
रिक्षभौमोपद्रवनिवारणार्थं च रक्षोघ्नमन्त्राः । महौष-
धिगणाः प्रीयन्तां प्रीताः सन्तु ॥

॥ इति महौषधिगणाः रक्षोघ्नमन्त्राः समाप्ताः ॥

---

१ द्विजोत्तम २ नृपोत्तम ३ नृप

| सूक्तनाम | अशुद्धः पाठः | शुद्धः पाठः | पृष्ठे | पंक्तौ |
|---|---|---|---|---|
| कूष्माण्डमन्त्रेषु | १।२।३।४।७।८ | सर्वाणि अर्धचन्द्रचिह्नानि त्याज्यानि ( ) | | |
| भौमसू० | रक्षोहनं | रक्षोहणं | २७ | ७ |
| बृह०सू० | स्वोरोहौ आयु० | स्वोरोहावा—यु | ४३ | १ |
| राकासू० | चिकितुषी | चिकितुषे | ८५ | २ |
| दीक्षा | अग्निपाव | आग्निपात्र | २२ | १ |
| देवीसू० | पादः | पदः | २८ | ३ |
| देवीसू० | संप्रसारयवहै | संप्रसारयावहै | २८ | ३ |

ग्राहकों से सविनय प्रार्थना यह है कि पाठकर्ता पुरुष इस शुद्धिपत्रसे सूचित स्थानों पर पहले शुद्धियां लिखे। फिर पाठ करे ॥

× [30]आग्निवारुणीति वैकुण्ठस्य ॥ यजुः ॥

[30]आग्निवारुणी[1]मनड्वाहीमालभेतानाज्ञातयक्ष्मगृहीतो-
ऽनाज्ञातयक्ष्मो वा एतां वित्तो या स्त्री सत्यनड्वाही तस्मा-
दे[2]नामनाज्ञातयक्ष्मगृहीत आलभेताग्निस्सर्वा देवता यदे-
वास्य देवताभिर्निषितं तदग्निना मुञ्चति य[3]द्वरुणगृहीतं
तद्व[3]रुणेन यद्वाहिनी तेनाग्नेयी यत्स्त्री सती दा[4]न्ता तेन वा-
रुणी तस्मादाग्निवारुणी भवति त्वाष्ट्र[5]मँसेपादमालभेत पशु-
कामो मिथुनो वा एष[6] यो ऽसेपात्त्वष्टा मिथुनस्य प्रजन-
यिता तमेव भागधेये[7]नोपधावति सो ऽस्मा एतस्मान्मिथु-
नात्पशून्प्रजनयति वा[8]रुणं श्यामशितिकण्ठमालभेत यं
[9]व्येमानं यक्ष्मो गृह्णीयाद्वरुणो वा ए[10]तं गृह्णाति यं [9]व्येमा-
नं यक्ष्मो गृह्णाति यद्वा[11]रुणो व[11]रुणादेवैनं मुञ्चति पाप्म[12]नैष
गृहीतो य आमयावी श्याम इव पाप्मा यच्छ्यामः पाप्मा-
नमेवापहते ॥ यच्छितिकण्ठो वरुणपाशमेव तेन प्रमुञ्च-
त आश्विनं धूम्रललाममालभेत यो दु[13][30]र्ब्राह्मणः सोमं पिपा-
ययिषेदश्विनौ वै देवानामसोमपा आस्तां तौ पश्चा[14]त्सो-
मपीथं प्राप्नुतामश्विना एतस्य देवता यः पश्चा[14]त्सोमपस्ता
एव भागधेयेनोपधावति ता एनँ सोमपीथाय परिणय[15]-

---

१ मा २ ता ३ द्वा ४ द ५ ष्ट्रेमांसे [ ष्ट्रमांसे ] ६ षायाँ सोपात्वष्टा [ यो सेपात्वष्टा ] ७ यो ८ व ९ व्यो १० एतद्गृ ११ व (वा) १२ प्मा १३ ब्राह्मणो १४ श्चा सो १५ यतस्ताय-दिवा [ यदेव ] ३० अ

× ॐ[३०]आग्निवारुणीति वैकुण्ठस्य ॥ यजुः ॥

ॐ[३०]आग्निवारुणीम[१]नड्वाहीमालभेतानाज्ञातयक्ष्मगृहीतो-
ऽनाज्ञातयक्ष्मो वा एतां वित्तो या स्त्री सत्यनड्वाही तस्मा-
दे[२]नामनाज्ञातयक्ष्मगृहीत आलभेताग्निस्सर्वा देवता यदे-
वास्य देवताभिर्निषितं तदग्निना मुञ्चति य[३]द्वरुणगृहीतं
त[३]द्वरुणेन यद्वाहिनी तेनाग्नेयी यत्स्त्री सती दान्ता[४] तेन वा-
रुणी तस्मादाग्निवारुणी भवति त्वाष्ट्र[५]मँसेपादमालभेत पशु-
कामो मिथुनो वा एष[६] यो ऽसेपात्त्वष्टा मिथुनस्य प्रजन-
यिता तमेव भागधेये[७]नोपधावति सो ऽस्मा एतस्मान्मिथु-
नात्पशून्प्रजनयति वा[८]रुणँ श्यामशितिकण्ठमालभेत यं
[९]ज्येमानं यक्ष्मो गृह्णीयाद्वरुणो वा ए[१०]तं गृह्णाति यं [९]ज्येमा-
नं यक्ष्मो गृह्णाति यद्व[११]रुणो व[११]रुणादेवैनं मुञ्चति पाप्म[१२]नैष
गृहीतो य आमयावी श्याम इव पाप्मा यच्छ्यामः पाप्मा-
नमेवापहते ॥ यच्छितिकण्ठो वरुणपाशमेव तेन प्रमुञ्च-
त आश्विनं धूम्रललाममालभेत यो दु[१३]र्ब्राह्मणँ सोमं पिपा-
ययिषेदश्विनौ वै देवानामसोमपा आस्तां तौ पश्चा[१४]त्सो-
मपीथं प्राप्नुतामश्विना एतस्य देवता यः पश्चा[१४]त्सोमपस्ता
एव भागधेयेनोपधावति ता एनँ सोमपीथाय परिणय[१५]-

---

१ मा २ ता ३ द्वा ४ द ५ ष्ट्रमांसे [ ष्ट्रमांसे ] ६ षायाँ सोपात्वश्टा [ यो सेपात्वष्टा ] ७ यो ८ व ९ ज्यो १० एतद्गृ ११ व (वा) १२ प्मा १३ ब्राह्मणो १४ श्चा सो १५ यतस्ताय-दिवा [ यदेव ] ३० अ

तस्तायदिव यजेत स्तायदिव हि दुर्ब्राह्मणो ब्राह्मणो भूषति धूम्र इव वा एष यो दुर्ब्राह्मणो यद्धूम्रो धूम्रिमाण-मेवापहते यल्ललामो मुखत एव तेन तेजो धत्त सारस्वतीं धेनुष्टरीमालभेत यं भ्रातृव्यं[16] नीव श्वासयेरन्वाचा वा एत एतं नि[17]श्वासयन्ते वाक्सरस्वती यत्सारस्वती वाचैवै-षां वाचं प्रति[18]शृणाति ॥ धेनुर्वा एषा सती न दुहे तस्मा-द्धेनुष्ट[19]र्युच्यते यद्धेनुष्टरी वाचमेवैषाँ स्तरीकरोति सारस्वतीं धेनुष्टरीमालभेत यमजघ्निवाँसमभिशँसेयुरशान्ता वा [20]एतं वा[21]र्गृच्छते यमजघ्निवाँसमभिशँसन्ति वाक्सरस्वती यत्सा-रस्वती वाचैवैषां वाचँ शमयति ॥ धेनुर्वा एषा सती न दुहे तस्माद्धेनुष्टर्युच्यते यद्धेनुष्टरी वाचमेवैषाँ स्तरीकरोति सावित्रं पुनरुत्सृष्टमालभेत यः पुरा[22] पुण्यो भूत्वा पश्चा-[23]त्पापीयान्स्याद्धया वा एष[24] देवतया पुरा[22] पुण्यो भवति सा हि वा एतमनुसृजत्यथैष[24] पापीयान्भवति सविता श्रि-यः प्रसविता [25]तमेव भागधेयेनोपधावति स एनं पुनः श्रियै प्रसुवति पापो वा एष[26] पुरा भूत्वा [27]पश्चाच्छ्रियं प्राप्नोति तेजोऽसि ॥ योऽनड्वान्भूतोच्चा भवति यथैव स[28] श्रियं प्राप्नोत्ये-[29]वमेवैनं श्रियं प्रापयति ॥१३॥६॥ पशुबन्धं नाम१३स्थानकम्

---

१६ व्यान्नी १७ निश्वासयन्ती ( निश्वासयंति ) १८ शृणोाते [ गृणाति ] १६ र्यो २० एतां २१ गृच्छते ( गच्छति ) २२ रः २३ यः स्या २४ षा २५ ता ० यः २६ ष( २७ श्चा श्रियं २८ सु २६ वमेनँ